2·4

# कारकम्

- जि. महाबलेश्वरभट्टः







संस्कृतभारती
बेङ्गलूरु

२३-०५-०२३

# कारकम्

- जि. महाबलेश्वर भट्टः
उपप्राध्यापकः (निवृत्तः)
श्री चामराजेन्द्रसंस्कृतमहापाठशाला
बेङ्गलूरु

संस्कृतभारती
बेङ्गलूरु

प्रकाशनम् -

संस्कृतभारती

'अक्षरम्', ८ उपमार्गः, २ घट्टः

गिरिनगरम्, बेङ्गलूरु - ५६० ०८५



प्रथमं मुद्रणम् - १९९९ - ५०००
द्वितीयं मुद्रणम् - २००० - ५०००
तृतीयं मुद्रणम् - २००२ - ५०००
चतुर्थं मुद्रणम् - २००५ - ५०००
पञ्चमं मुद्रणम् - २००८ - ५०००
षष्ठं मुद्रणम् - २०१० - ५०००
सप्तमं मुद्रणम् - २०१२ - ५०००
अष्टमं मुद्रणम् - २०१४ - ५०००
नवमं मुद्रणम् - २०१४ - १०,०००
दशमं मुद्रणम् - २०१७ - १०,०००

मूल्यं - रू. २५.००

मुद्रणम् -

राष्ट्रोत्थानमुद्रणालयः

केम्पेगौडनगरम्, बेङ्गलूरु

ISBN 978-81-88220-26-4

KĀRAKAM - A Study book for 'Kārakam', prepared by Sri G. Mahabaleshwara Bhat. Publishers - SAMSKRITA BHARATI, 'Aksharam', 8th Cross, II Phase, Girinagar, Bangalore - 560 085. Ph : 26721052 / 26722576 E-mail: samskritam@gmail.com

Pages - vi + 78    Price - Rs. 25-00    Tenth Print - June - 2017

Printed at - RASHTROTTHANA MUDRANALAYA, K.G. Nagar, B'lore

# प्रस्तावना

## (प्रथममुद्रणस्य)

कारकप्रकरणं व्याकरणशास्त्रे हृदयभूतम् । हृदयपरिशीलनं हृदयचिकित्सां च वैद्याः सावधानेन मनसा कुर्वन्ति । तथैव कारकमपि अवहितेन चित्तेन अवधारणीयं बोधनीयं च । अध्यापयितृभिः अध्येतृभिश्च विनायासं कारकं सुविदितं भवतु इति मनीषया इदं पुस्तकम् आरचितम् ।

पाणिनिः आदौ कारकसंज्ञां विधत्ते । ततो विभक्तीः अभिधत्ते । तथैव अत्रापि कारकं षट् कारकाणि च विविच्य प्रोक्तानि । ततः कारकविभक्तयः, उपपदविभक्तयश्च निरूपिताः ।

सर्वत्र उदाहरणम् आदौ आदृतम् । तत्सम्बन्धिसूत्रं पश्चात् लिखितम् । सिद्धान्तकौमुद्याः वृत्तिः अनन्तरं दर्शिता । पुनरपि सूत्रस्य तात्पर्यार्थं विलिख्य उदाहरणे सूत्रार्थस्य सङ्गमनं प्रायः सर्वत्र कृतम् ।

सिद्धान्तकौमुद्यां कारकप्रकरणे स्थितानि सर्वाणि सूत्राणि इह न व्याख्यातानि । क्वचिदेव प्रयोगे यानि सूत्राणि अपेक्षितानि तानि इह त्यक्तानि । किन्तु तेषां परिशीलनाय आनुकूल्यं सौविध्यं भवतु इति सिद्धान्तकौमुद्याः समग्रं कारकप्रकरणम् एव अन्ते निवेशितम् ।

कारकसम्बद्धाः केचन विषयाः अपि अन्ते नियोजिताः, येषाम् अवगमनं कदाचित् प्रयोजनकृत् भवेत् । सिद्धान्तकौमुद्याः व्याख्ये बालमनोरमा-तत्त्वबोधिन्यौ, श्रीशिवदत्तशर्मणां टिप्पणीं च स्मारं स्मारं, सिद्धान्तकौमुदीं च हृदि निधाय, एतत्कर्तॄणां सर्वथा मदीयाम् अधमर्णताम् आविष्करोमि ।

संस्कृतभारत्यै, कलाकाराय, अक्षरसंयोजकाय, मुद्रकाय च धन्यवादाः समर्प्यन्ते ।

- लेखकः

बहुधान्य सं॥ पौषकृष्णतृतीया

०४.०१.१९९९

## (दशममुद्रणस्य)

कारकपुस्तकस्य दशमावृत्तिं भवतां करकमले समर्पयन्तः स्मः । अत्र सहकृतवद्भ्यः सर्वेभ्यः , मुद्रकाय, अन्येभ्यः सहकारिभ्यः च कृतज्ञताः समर्प्यन्ते ।

- प्रकाशकः

हेमलम्बि सं ॥ ज्येष्ठशुक्लसप्तमी

१. ६. २०१७

# अनुक्रमणिका

# १. कारकम्

क्रमवतां वर्णानां समूहः पदम् । पदसमूहः वाक्यम् । वाक्यम् अभीप्सितम् अर्थं बोधयति । अतः शब्दप्रपञ्चे वाक्यमेव प्राधान्यम् आवहति । किन्तु पदम् अन्तरा वाक्यं न भवति । ऋते वर्णेभ्यः पदं नास्ति । अतः व्याकरणे वर्णनिमित्तानि कार्याणि, पदनिमित्तानि कार्याणि च सन्ति । प्रायः सन्धिकार्याणि वर्णनिमित्तकानि । समासादीनि पदनिमित्तकानि । वाक्यम् अवलम्ब्य प्रवृत्तानि भवन्ति कारकाणि, कारकसम्बन्धीनि कार्याणि च । साक्षात् परम्परया वा वाक्यानि संस्कर्तुम् एव व्याकरणं प्रवृत्तम् । सम्प्रति,कारकाणि, कारकसम्बन्धीनि कार्याणि च इह प्रस्तूयन्ते ।

## (अ) वाक्यम्

किं नाम वाक्यम् ? कारकान्विता क्रिया वाक्यम् । यथा - १. मृगो धावति, २. छात्रः श्लोकं पठति, ३. सः कटे उपविशति इति । एषु प्रथमवाक्ये कर्तृकारकेण अन्विता धावनक्रिया । द्वितीये - कर्तृकारकेण कर्मकारकेण च अन्विता पठनक्रिया । तृतीये - कर्तृकारकेण अधिकरणकारकेण च अन्विता उपवेशनक्रिया ।

## (आ) कारकम्

किं नाम कारकम् ? क्रियान्वयि कारकम् । क्रियायाः अन्वयः = क्रियान्वयः । अन्वयः = सम्बन्धः । क्रियान्वयः अस्य अस्ति इति क्रियान्वयि । यः क्रियया अन्वेति (सम्बन्धं प्राप्नोति) सः कारकम् इत्युच्यते इति फलितार्थः । यथा -

१. **पाचकः पचति** । अत्र पाचकः पाकक्रियायाम् अन्वेति । अतः पाचकः कारकम् । तच्च प्रकृते कर्तृकारकम् ।

२. **गां स्पृशति** । अत्र गौः स्पर्शनक्रियायाम् अन्वेति । अतः सा कारकम् । तच्च प्रकृते कर्मकारकम् ।

३. **परशुना छिनत्ति** । अत्र परशुः छेदनक्रियायाम् अन्वेति । अतः कारकम् । तच्च प्रकृते करणकारकम् ।

४. **बालाय फलं ददाति** । अत्र बालः दानक्रियायाम् अन्वेति । अतः बालः कारकम् । तच्च प्रकृते सम्प्रदानकारकम् ।

५. **प्रासादात् पतति** । अत्र प्रासादः पतनक्रियायाम् अन्वेति । अतः प्रासादः कारकम् । तच्च अपादानकारकम् ।

६. पीठे उपविशति । अत्र पीठम् उपवेशनक्रियायाम् अन्वेति । अतः पीठं कारकम् । तच्च प्रकृते अधिकरण- कारकम् ।

कर्तृकारकम् क्रियायां साक्षात् अन्वेति । अन्यानि कारकाणि तु परम्परया क्रियायाम् अन्वयं प्राप्नुवन्ति इति ज्ञेयम् ।

इदं परिशील्यताम् – ⟶




कः, कां, केन, कस्मै, कस्मात्, कुत्र ददाति इति प्रश्नः (अयोध्यायाः) राजा, गां, हस्तेन, विप्राय, गोष्ठात्, गङ्गातीरे ददाति इति वाक्येन समाहितः भवति । अतः दानक्रियायां षडपि कारकाणि अन्वितानि भवन्ति इति स्पष्टम् । 'कस्य राजा' इति प्रश्नस्तु 'अयोध्यायाः राजा' इत्यनेन समाहितः भवति । अयोध्यायाः अन्वयः राज्ञि एव, न तु दानक्रियायाम् । अतः षष्ठी (शेषषष्ठी) कारकं न इति उद्घोषः ।

इत्थञ्च क्रियया सह कारकाणां सम्बन्धस्य परिशीलनाय प्रश्नोत्तररूपः पन्थाः सुगमः । यथा – 'कः पचति ?' = कः पाकक्रियां निर्वर्तयति ? इति उत्थितायाः आकांक्षायाः (प्रश्नस्य) उपशमनं देवदत्तः पचति = 'देवदत्तः पाकक्रियां निर्वर्तयति' इति वाक्येन (उत्तरेण) भवति । देवदत्तस्य कर्तुः पाकक्रियया सह सम्बन्धः यदि न अभविष्यत् तर्हि आकांक्षायाः उपशमनमपि न अभविष्यत् । जातश्च उपशमनम् आकांक्षायाः । अतः क्रियया सह सम्बन्धः अस्तीति ज्ञायते । एवम् अन्यकारकादौ अपि ज्ञेयम् ।

## (इ) धात्वर्थः [ धातुः < फलम् / व्यापारः ]

पचति इत्यादौ तिङन्ते प्रकृतिः पचधातुः, प्रत्ययश्च तिङ् । 'पक्ववान्', 'पचन्' इत्यादौ कृदन्तेऽपि प्रकृतिः प्रत्ययश्च भवतः । तत्रापि प्रकृतिः धातुः, प्रत्ययश्च कृत् । एवञ्च धातोः द्वये प्रत्ययाः – तिङः कृतश्चेति । तत्र धातोः अर्थः निरूप्यते । तथाहि –

धातुः फलं व्यापारं च बोधयति । यथा – 'पचति' इत्यत्र पच्धातुः अस्ति । सः पच्धातुः विक्लित्तिरूपं फलं (विक्लित्तिः = मृदुविशदत्वम् । तण्डुलादौ जायमानः विकारः इति यावत्) तदनुकूलव्यापारञ्च बोधयति । एवञ्च पच्धातोः अर्थः विक्लित्त्यनुकूलव्यापारः इति । यथा वा –

१. गच्छति । अत्र गम्धातुः संयोगरूपं फलं तदनुकूलव्यापारञ्च बोधयति । अतः गम्धातोः अर्थः – संयोगानुकूलव्यापारः इति ।

२. वर्धते । अत्र वृध्धातुः वर्धनरूपं फलं, तदनुकूलव्यापारं च बोधयति । अतः वृध्धातोः अर्थः – वर्धनानुकूलव्यापारः इति ।

इत्थं च सर्वे धातवः 'फलं व्यापारश्च' इत्यर्थद्वयं बोधयन्ति इति ज्ञेयम् ।

## (ई) तिङर्थः

### [ति/ते – कारकं/भावः, कालः, संख्या च]

पचति इत्यादौ तिङ्प्रत्ययः श्रूयते । तिङ्प्रत्ययस्य कारकं/भावः, कालः, सङ्ख्या च अर्थाः । यथा – पचति/ते इत्यत्र 'ति/ते' प्रत्ययः कर्तृकारकं, वर्तमानकालम्, एकत्वसङ्ख्यां च बोधयति । पच्यते इत्यत्र तु 'ते' इति प्रत्ययः कर्मकारकं, वर्तमानकालम्, एकत्वसङ्ख्यां च बोधयति । एवं च तिङ्प्रत्ययः कर्तृकारकं कर्मकारकं वा बोधयति, न अन्यानि कारकाणि इति ज्ञेयम् । भूयते इत्यादौ 'ते' इति प्रत्ययः भावं कालञ्च बोधयति । अत एव प्रयोगः त्रिधा – १. कर्तरि २. कर्मणि ३. भावे चेति । अथवा – १. कर्तृवाच्यः २. कर्मवाच्यः ३. भाववाच्यः च इति त्रिधा ।

एषः फलितार्थः –

i. पाचकः ओदनं पचति/ते ।




ii. पाचकेन तण्डुलः पच्यते ।




iii. रामेण भूयते ।



# (ड) कारकाणि

क्रियान्वयि कारकम् इत्युक्तम् । तच्च कारकं षोढा । तथाहि –

*कर्ता कर्म च करणं सम्प्रदानं तथैव च ।*
*अपादानाधिकरणमित्याहुः कारकाणि षट् ॥* इति ।

## १. कर्ता

स्वतन्त्रः कर्ता – १.४.५४. क्रियायां स्वातन्त्र्येण विवक्षितः अर्थः कर्ता स्यात् इति सूत्रार्थः । स्वातन्त्र्यं नाम व्यापाराश्रयत्वम् । एवञ्च – व्यापाराश्रयः कर्ता इति फलितोऽर्थः ।

धात्वर्थः – फलं व्यापारः च इति उक्तम् । तत्र व्यापारस्य यः आश्रयः सः कर्ता भवति । यथा – **सूदः पचति** ।

पच्धातोरर्थः – पाकक्रिया (पाकव्यापारः) । सा क्रिया कुत्र अस्ति ? सूदे अस्ति । तथा च पाकक्रियायाः आश्रयः सूदः । अतः सूदः कर्ता । यथा वा –

१. **बालः खादति** । खाद्धातोः अर्थः भक्षणक्रिया । सा क्रिया बाले अस्ति । अतः क्रियायाः 'आश्रयः बालः । अतः बालः कर्ता ।
२. **वटुः लिखति** । लिख्धातोः अर्थः लेखनक्रिया । सा क्रिया वटौ अस्ति । अतः लेखनक्रियायाः आश्रयः वटुः । अतः वटुः कर्ता ।
३. **सूर्यः प्रकाशते** । धात्वर्थः प्रकाशनक्रिया । सा क्रिया सूर्ये अस्ति । अतः प्रकाशनक्रियायाः आश्रयः सूर्यः । अतः सूर्यः कर्ता ।

## २. कर्म

कर्तुरीप्सिततमं कर्म – १.४.४९ कर्तुः क्रियया आप्तुम् इष्टतमं कारकं कर्मसंज्ञं स्यात् इति सूत्रार्थः । कर्ता काञ्चित् क्रियां निर्वर्तयति । तया क्रियया किञ्चित् फलं जायते । तच्च फलं यत्र सम्बद्धं भवतु इति इच्छति तत् कर्मसंज्ञां प्राप्नोति । तथा च कर्ता स्वक्रिया(प्रयोज्य)जन्यफलेन सम्बन्धुम् इष्यमाणं कारकं कर्मसंज्ञं स्यात् इति फलितोऽर्थः ।

यथा – **सूदः तण्डुलं पचति** । अत्र पच्धातोः अर्थः विक्लित्तिरूपं फलं, तदनुकूलक्रिया च । पाकक्रियायाः आश्रयः सूदः । अतः सूदः कर्ता । कर्तुः सूदस्य पाकक्रियाजन्यविक्लित्तिरूपफलेन सम्बन्धुम् इष्यमाणः तण्डुलः । अतः तण्डुलः कर्म भवति ।

(इदं मनसि आकलनीयम् – 'अत्र सूदः पाकक्रियां निर्वर्तयति । तण्डुले विक्लित्तिरूपः

विकारः जायते । स्वपाकक्रियया तण्डुले विक्लित्तिरूपः विकारः (विक्लित्तिरूपं फलं) जायताम् इति इच्छया एव सूदः प्रवर्तते' इति ।) यथा वा -

१. **बालः ग्रामं गच्छति ।** गम्धातोः अर्थः संयोगरूपं फलं, तदनुकूलक्रिया च । गमनक्रियायाः आश्रयः बालः । अतः बालः कर्ता । कर्तुः बालस्य गमनक्रियाजन्यसंयोगरूपफलेन सम्बन्धुम् इष्यमाणः ग्रामः । अतः ग्रामः कर्म भवति । (गमनं नाम पूर्वदेशस्य त्यागः, उत्तरदेशस्य प्राप्तिः । बालः स्वगमनेन ग्रामे स्वसंयोगो भवतु इति इच्छति ।)

२. **चैत्रः कूपं खनति ।** खन्धातोः अर्थः अवदारणरूपं फलं, तदनुकूलक्रिया च । खननक्रियायाः आश्रयः चैत्रः । अतः चैत्रः कर्ता । कर्तुः चैत्रस्य खननक्रियाजन्य-अवदारणरूपफलेन सम्बन्धुम् इष्यमाणः कूपः । अतः कूपः कर्म भवति ।

३. **भक्तः हरिं भजति ।** भज्धातोः अर्थः तुष्टिरूपं फलं, तदनुकूलक्रिया च । भजनक्रियायाः आश्रयः भक्तः । अतः भक्तः कर्ता । कर्तुः भक्तस्य भजनक्रियाजन्यतुष्टिरूपफलेन सम्बन्धुम् इष्यमाणः हरिः । अतः हरिः कर्म भवति । (भजनं नाम पूजनादिपरिचरणात्मिका क्रिया । परिचरणात्मिकां क्रियां भक्तः करोति । तया परिचरणात्मकक्रियया हरौ तुष्टिः भवति । भक्तः भजनक्रियया हरौ तुष्टिरूपं फलं भवतु इति इच्छया खलु प्रवर्तते ।)

### इदमवधेयम् -

सर्वेषां धातूनाम् अर्थः - फलं क्रिया च । धातवश्च सकर्मकाः अकर्मकाश्चेति द्विधा । तत्र सकर्मकधातुः यदा प्रयुज्यते तदा फलम् एकत्र भवति, क्रिया अन्यत्र भवति । फलं यत्र भवति सः कर्म । अतः एव फलाश्रयः कर्म इत्युच्यते । क्रिया यत्र भवति सः कर्ता । अतः एव क्रियाश्रयः कर्ता इत्युच्यते । यथा - सूदः तण्डुलं पचति । पच्धातोः अर्थः विक्लित्तिरूपं फलं तदनुकूलक्रिया च । विक्लित्तिः तण्डुले । अतः तण्डुलः कर्म । क्रिया सूदे । अतः सूदः कर्ता । अकर्मकधातुः यदा प्रयुज्यते तदा फलं क्रिया च कर्तरि एव भवतः । यथा - चन्द्रः वर्धते । वृध्धातोः अर्थः - वृद्धिरूपं फलं तदनुकूलक्रिया च । एतदुभयमपि कर्तरि चन्द्रे एव वर्तते ।

## ३. करणम्

साधकतमं करणम् - १.४.४२ क्रियासिद्धौ प्रकृष्टोपकारकं कारकं करणसंज्ञं स्यात् इति सूत्रार्थः ।

यत् स्वव्यापारसमनन्तरमेव फलोत्पादकं तत्करणमिति फलितोऽर्थः ।

यथा - **रामः बाणेन रावणं हन्ति** । हन्धातोरर्थः - प्राणवियोगरूपं फलं तदनुकूलक्रिया च । हननक्रियाश्रयः रामः । अतः सः कर्ता । प्राणवियोगरूपं फलं रावणे अस्ति । फलाश्रयत्वात् रावणः कर्म । धनुषः मुक्तः बाणः गच्छन् रावणं विध्यति (प्रविशति) । समनन्तरमेव प्राणवियोगः (फलम्) रावणे भवति । बाणस्य प्रवेशनव्यापारसमनन्तरमेव प्राणवियोगरूपं फलम् उत्पन्नम् । अतः बाणः स्वव्यापारसमनन्तरम् एव प्राणवियोगरूपफलोत्पादकः अस्तीति बाणः करणम् । अतः प्रकृष्टोपकारकं नाम = स्वव्यापारसमनन्तरं फलोत्पादकम् एव इति ज्ञेयम् । यथा वा -

१. **देवदत्तः परशुना वृक्षं छिनत्ति** । छिदधातोरर्थः विदारणरूपफलं, तदनुकूलक्रिया च । क्रियाश्रयो देवदत्तः कर्ता । विदारणरूपं फलं वृक्षे अस्ति । अतः फलाश्रयत्वात् वृक्षः कर्म । देवदत्तः हस्ताभ्यां परशुम् उपरि नीत्वा अधः पातयति । अनेकशः उपरिनयनाधःपातनव्यापारसमनन्तरम् एव वृक्षे विदारणरूपं फलम् उत्पन्नम् । अतः परशुः स्वव्यापारसमनन्तरम् एव विदारणरूपफलोत्पादकः अस्ति इति परशुः करणम् ।

२. **बालः पादाभ्यां गृहं गच्छति** । गम्धातोरर्थः - उत्तरदेशसंयोगः तदनुकूलक्रिया च । क्रियाश्रयः बालः कर्ता । संयोगरूपं फलं गृहे अस्ति । अतः फलाश्रयत्वात् गृहं कर्म । बालः पादौ उद्धृत्य निक्षिपति । अनेकशः उद्धरणनिक्षेपणव्यापारसमनन्तरमेव गृहे संयोगः उत्पन्नः । अतः पादौ स्वव्यापारसमनन्तरमेव संयोगरूपफलोत्पादकौ स्तः इति पादौ करणम् ।

## ४. सम्प्रदानम्

**कर्मणा यमभिप्रैति स सम्प्रदानम्** - १.४.३२. कर्मणा यमभिप्रैति स सम्प्रदानम् इति सूत्रार्थः ।

कर्मणा सम्बन्धुं यम् अभिप्रैति (इच्छति) सः सम्प्रदानं स्यादिति फलितार्थः । देयद्रव्योद्देश्यं सम्प्रदानमिति तात्पर्यार्थः । यथा - **पिता मोदकं बालाय ददाति** । दाधात्वर्थः हस्तादौ स्थापनरूपं फलं तदनुकूलक्रिया च । दानक्रियाश्रयः पिता कर्ता । स्थापनरूपं फलं मोदके । अतः मोदकः कर्म । कर्मभूतेन तेन मोदकेन पिता कं सम्बन्धुम् अभिप्रैति ? कर्मभूतेन मोदकेन बालं सम्बन्धुम् अभिप्रैति । अतः सः बालः सम्प्रदानं भवति । (कर्मभूतं वस्तु यम् अधिगच्छति सः सम्प्रदानं भवति । अत्र कर्मभूतं वस्तु मोदकः बालकम् अधिगच्छति । अतः बालः सम्प्रदानम् ।) यथा वा -

१. **खण्डिकोपाध्यायः शिष्याय चपेटां ददाति** । दाधात्वर्थः संयोगरूपं फलं, तदनुकूलव्यापारश्च । क्रियाश्रयः खण्डिकोपाध्यायः कर्ता । चपेटा

नाम प्रसृतकरतलम्। संयोगरूपं फलं चपेटायाम्। अतः चपेटा कर्म भवति। कर्मभूतया चपेटया कं सम्बन्धुम् अभिप्रैति ? कर्मभूतया चपेटया शिष्यम् अभिसम्बन्धुम् अभिप्रैति। अतः शिष्यः सम्प्रदानम्। (कर्मभूता चपेटा शिष्यं खलु अधिगच्छति। अतः सः सम्प्रदानम्।)

२. **चैत्रः रजकाय वस्त्रं ददाति**। दाधात्वर्थः अधीनीकरणं, तदनुकूलक्रिया च। क्रियाश्रयः चैत्रः कर्ता। अधीनीकरणरूपं फलं वस्त्रे। अतः वस्त्रं कर्म। कर्मभूतेन वस्त्रेण कं सम्बन्धुम् अभिप्रैति ? कर्मभूतेन वस्त्रेण रजकं सम्बन्धुम् अभिप्रैति। अतः रजकः सम्प्रदानम्। (कर्मभूतं वस्त्रं रजकं खलु अधिगच्छति। अतः रजकः सम्प्रदानम्।)

३. **राजा विप्राय गां ददाति**। दाधात्वर्थः स्वस्वत्त्वनिवृत्तिपूर्वकपरस्वत्वारोपणं, तदनुकूलक्रिया च। दानक्रियाश्रयः राजा कर्ता। स्वस्वत्वनिवृत्तिपूर्वक-परस्वत्वारोपणं गवि। अतः गौः कर्म। कर्मभूतया गवा राजा कं सम्बन्धुम् अभिप्रैति ? कर्मभूतया गवा विप्रम् अभिसम्बन्धुम् अभिप्रैति। अतः विप्रः सम्प्रदानम्। (कर्मभूता गौः विप्रं खलु अधिगच्छति। अतः विप्रः सम्प्रदानम्।)

## ५. अपादानम्

ध्रुवमपायेऽपादानम् - १.४.२४ (अपायः - विश्लेषः। ध्रुवम् - अवधिभूतम्) विश्लेषे साध्ये अवधिभूतं कारकम् अपादानं स्यात् इति सूत्रार्थः। विभागाश्रयः अपादानं भवति इति फलितार्थः। यथा - **पर्णं वृक्षात् पतति**। पत्धातोरर्थः अधोदेशसंयोगरूपं फलं, तदनुकूलक्रिया च। पतनक्रियाश्रयः पर्णं कर्तृ। अवधिभूतः विभागाश्रयः वृक्षः। अतः वृक्षः अपादानम्। (यत्र अपादानस्य प्रसक्तिः तत्र द्वयोः संयुक्तयोः विभागः भवेत् एव। यथात्र संयुक्तयोः वृक्षपर्णयोः विभागः जातः अस्ति।)

विभागः वृक्षे पर्णे च अस्ति, विभागस्य द्विनिष्ठत्वात्। अतः पर्णम् अपि विभागाश्रयः एव इत्यतः पर्णम् अपि कुतः अपादानं न भवति इति शङ्का जायते। तत्र इदं समाधानम् - पर्णं यथा विभागाश्रयः तथा पतनक्रियाश्रयः अपि। अतः विभागाश्रयत्वात् पर्णम् अपादानसंज्ञकं, पतनक्रियाश्रयत्वात् कर्तृसंज्ञकम् अपि। एकस्य एव द्वयोः प्रसक्तौ परसंज्ञा एव कर्तव्या। अष्टाध्याय्याम् अपादानसंज्ञायाः (१.४.२४) अपेक्षया कर्तृसंज्ञा (१.४.५४) एव परा। अतः पर्णस्य कर्तृसंज्ञा एव, न तु अपादानसंज्ञा। अत्र प्रमाणं - 'विप्रतिषेधे परं कार्यम्' इति सूत्रम्। यथा वा -

१. **कृष्णः गोकुलात् आगच्छति** । आगमनक्रियाश्रयः कृष्णः कर्ता । संयुक्तयोः कृष्णगोकुलयोः कृष्णस्य आगमनेन विभागः जातः । तदा अवधिभूतः विभागाश्रयः गोकुलम् । अतः गोकुलम् अपादानम् ।

२. **पान्थः पर्वतात् अवरोहति** । अवरोहणक्रियाश्रयः पान्थः कर्ता । संयुक्तयोः पान्थपर्वतयोः अवरोहणेन विभागः जातः । तदा (अवधिभूतः) विभागाश्रयः पर्वतः । अतः पर्वतः अपादानम् ।

३. **खगः वृक्षात् डयते** । डयनक्रियाश्रयः खगः कर्ता । संयुक्तयोः खगवृक्षयोः डयनेन विभागः जातः । तदा (अवधिभूतः) विभागाश्रयः वृक्षः । अतः वृक्षः अपादानम् ।

## ६. अधिकरणम्

आधारोऽधिकरणम् – १.४.४५ कर्तृकर्मद्वारा तन्निष्ठक्रियायाः आधारः कारकम् अधिकरणसंज्ञः स्यादिति सूत्रार्थः । कर्तरि विद्यमानक्रियायाः कर्मणि विद्यमानफलस्य वा आधारः अधिकरणसंज्ञको भवतीति फलितार्थः ।

१. कर्तृनिष्ठक्रियायाः उदाहरणम् –

**बालः कटे उपविशति** । उप-उपसर्गपूर्वकविशधातोः अर्थः यत्किञ्चिद्देश-संयोगरूपं फलम्, तदनुकूलक्रिया च । उपवेशनक्रियायाः आश्रयः बालः कर्ता । बाले विद्यमानायाः क्रियायाः आधारः कटः । अतः कटः अधिकरणम् ।

२. कर्मनिष्ठक्रियायाः उदाहरणम् –

**सूदः ओदनं स्थाल्यां पचति** । पच्धातोः अर्थः विक्लित्तिरूपफलं, तदनुकूलक्रिया च । पाकक्रियाश्रयः सूदः कर्ता । विक्लित्तिरूपफलाश्रयः ओदनः कर्म । कर्मभूते ओदने वर्तमानस्य विक्लित्तिरूपफलस्य आधारः स्थाली । अतः स्थाली अधिकरणम् । ('बालः कटे उपविशति' इति उदाहरणे उपवेशनक्रिया बाले अस्ति । अतः साक्षात् क्रियायाः आधारः बालः एव । बालद्वारा क्रियायाः आधारः कटः । 'सूदः ओदनं स्थाल्यां पचति' इति उदाहरणे, विक्लित्तिरूपफलम् ओदने अस्ति । अतः साक्षात्फलस्य आधारः ओदनम् एव । ओदनद्वारा फलस्य आधारः स्थाली । अतः सर्वत्र परम्परया क्रियायाः फलस्य वा आधारः एव अधिकरणं भवति इति ज्ञेयम् । ('कर्तुः कर्मणः वा आधारः अधिकरणं भवति' इति बालान् उद्दिश्य बोधनं वरम् ।)

## ७. इदमवधेयम्

अष्टाध्याय्यां कारकसंज्ञाविधायकसूत्राणां क्रमः इत्थम् ।

१. ध्रुवमपायेऽपादानम् - १.४.२४

२. कर्मणा यमभिप्रैति स सम्प्रदानम् - १.४.३२

३. साधकतमं करणम् - १.४.४२

४. आधारोऽधिकरणम् - १.४.४५

५. कर्तुरीप्सिततमं कर्म - १.४.४९

६. स्वतन्त्रः कर्ता - १.४.५४

विप्रतिषेधे परं कार्यम् - १.४.२ इति सूत्रस्य सञ्चाराय अष्टाध्याय्याः क्रमः अवश्यम् अपेक्षितः ।

### (ऊ) अनभिहिते

[सूदः तण्डुलम् पचति । सूदेन तण्डुलः पच्यते ।]

कर्म कर्ता कर्ता कर्म

'सूदः तण्डुलं पचति' इत्यत्र सूदः कर्ता । कर्तुः सूदस्य ईप्सिततमः तण्डुलः । अत्र तण्डुलः कर्म । तण्डुलः कर्मकारकमिति निश्चये जाते 'कर्मणि द्वितीया' इति सूत्रेण द्वितीयाविभक्तिः तण्डुलशब्दात् परा विधीयते । तदा 'सूदः तण्डुलं पचति' इति प्रयोगः सम्भवति । 'सूदेन तण्डुलः पच्यते' इत्यत्रापि सूदः कर्ता, तण्डुलः कर्म । किन्तु तण्डुलशब्दात् परा द्वितीयाविभक्तिः कुतो न प्रवृत्ता ? इति आशङ्का समुदेति । अस्याः शङ्कायाः समाधानं विस्तरेण निरूप्यते । तथा हि -

i. **सूदः तण्डुलं पचति** इत्यत्र 'अम्' इति द्वितीयाविभक्तिः श्रूयते । 'अम्' इत्यस्य अर्थः कर्म इति । 'पचति' इति तिङन्तम् अपि वाक्ये विद्यते । तत्र 'ति'प्रत्ययः श्रूयते । तस्य तिप्रत्ययस्य अर्थः कर्ता इति । सः कर्ता कः इत्याकाङ्क्षायां वाक्ये श्रूयमाणः सूदः इति वक्तव्यम् । इदमेव इत्थं विलिख्य प्रदर्शयितुं शक्यम् - **सूदः तण्डुलम् पचति** इति । 'तण्डुलकर्मकः सूदकर्तृकः पाकव्यापारः' इति

↑ कर्म कर्ता

'सूदः तण्डुलं पचति' इति वाक्यस्य अर्थः सम्पन्नः ।

ii. **सूदेन तण्डुलः पच्यते** इत्यत्र 'इन' (टा) इति तृतीयाविभक्तिः श्रूयते । 'इन' इत्यस्य अर्थः 'कर्ता' इति । 'पच्यते' इति तिङन्तं श्रूयते । तत्र 'ते' इत्यस्य अर्थः 'कर्म' इति । तत् कर्म किम् इत्याकाङ्क्षायां वाक्ये श्रूयमाणः तण्डुलः

एव । इदम् इत्थं विलिख्य प्रदर्शयितुं शक्यम् – सूदेन तण्डुलः पच्यते इति ।




'तण्डुलकर्मकः सूदकर्तृकः पाकव्यापारः' इत्येव अर्थः 'सूदेन तण्डुलः पच्यते' इति वाक्यस्य अपि । अत्र इदमपि ज्ञातव्यम् – 'वटुः जलम् आनयति' इति इदं वाक्यं शुद्धम् । किन्तु इमम् एव अर्थं बोधयितुं – 'वटुः जलम् उदकम् आनयति' इति प्रयोगः न सम्भवति । कुतः ? जलार्थबोधकयोः द्वयोः उपादानम् अस्मिन् वाक्ये अस्ति । एकम् अर्थं बोधयितुम् एकं पदं पर्याप्तम् । तमेव अर्थं बोधयितुं न द्वितीयं पर्यायपदम् अपेक्षितम् । अर्थबोधनाय खलु शब्दस्य प्रयोगः । एकस्मात् शब्दात् अर्थः ज्ञातः चेत् तस्य एव अर्थस्य बोधनाय द्वितीयस्य शब्दस्य न कथमपि अवसरः । अतः एव एषः न्यायः प्रवृत्तः – 'उक्तार्थानाम् अप्रयोगः' इति । एकेन शब्देन अर्थः उक्तः चेत् तस्य एव अर्थस्य बोधनाय न द्वितीयस्य शब्दस्य प्रयोगः इति अस्य न्यायस्य अर्थः । प्रकृते तु 'सूदः तण्डुलं पचति' इत्यत्र यथा कर्मणः परो द्वितीया श्रूयते तथैव 'सूदेन तण्डुलः पच्यते' इत्यत्रापि कर्मभूतात् तण्डुलात् परा द्वितीया कुतः न इति शङ्का समुत्थापिता । यदि शङ्कानुगुणं 'सूदेन तण्डुलः पच्यते' इत्यत्र तण्डुलात् अपि द्वितीया स्यात् तदा 'सूदेन तण्डुलं पच्यते' इति स्यात् । तदा कर्मरूपार्थं बोधयितुं (सूदेन तण्डुलम् पच्यते) 'अम्' इति 'ते' इति शब्दद्वयं प्रयुक्तं भवति ।

कर्म कर्म

एवञ्च 'वटुः जलम् उदकम् आनयति' इति प्रयोगः यथा न युक्तः, तथैव 'सूदेन तण्डुलम् पच्यते' इति प्रयोगः अपि न युक्तः भवति । अतः येन केनापि

कर्म कर्म

कर्म अनुक्तं (अनभिहितं) चेत् द्वितीयाविभक्तिः कर्मणः परा भवति, कर्म येनकेनापि उक्तं चेत् न प्रवर्तते एव । एवं तर्हि केन केन उक्तं भवति इति चेत् तिङ्प्रत्ययेन, कृत्प्रत्ययेन, तद्धितेन, समासेन च इति गृह्यताम् । तिङ्प्रत्ययेन कर्मणः अभिधाने सति द्वितीया न भवति इत्यस्य उदाहरणम् – 'सुदेन तण्डुलः पच्यते' इति दर्शितम् । कृत्प्रत्ययेन कर्मणः अभिधाने तु द्वितीया न भवति इत्यस्य 'बालेन श्लोकः पठितः' इति उदाहरणं ज्ञेयम् । अत्र 'क्त'प्रत्ययार्थः 'कर्म' इति ।

कर्म

'सूदेन तण्डुलः पच्यते' इत्यत्र तण्डुलात् द्वितीया कुतः न इति यथा शङ्का जागर्ति तथैव 'सूदः तण्डुलं पचति' इत्यत्र कर्तृवाचकात् सूदशब्दात् तृतीया कुतः न इति

सन्देहः समुदेति । 'कर्तृकरणयोः तृतीया' इति सूत्रेण हि कर्तरि तृतीयाविधानात् । अत्रापि शङ्कानुगुणं 'सूदेन तण्डुलं पचति' इति प्रयोगः क्रियेत तदा कर्तारं

कर्ता कर्ता

बोधयितुम् एव 'इन' इति, 'ति' इति शब्दद्वयं प्रयुक्तं भवति । तदा 'वटुः जलम् उदकम् आनयति' इति वाक्यसदृशम् एव स्यात् । अतः येन केनापि अनुक्तः चेदेव कर्तृवाचकात् तृतीया भवति, कर्ता उक्तः चेत् तृतीया न भवति इति ज्ञेयम् । तिङ्प्रत्ययेन कर्तुः अभिधाने तृतीया न भवति इत्यत्र 'सूदः तण्डुलं पचति' इति उदाहरणं दर्शितम् । कृत्प्रत्ययेन कर्तुः अभिधाने तृतीया न भवति इत्यस्य उदाहरणन्तु 'बालः श्लोकं पठितवान्' इति । अत्र क्तवतुप्रत्ययस्य अर्थः

कर्ता

कर्ता इति । एषः अभिप्रायः भगवता पाणिनिना 'अनभिहिते' इति एकपदात्मकेन सूत्रेण आविष्कृतः ।

## (ऋ) एष उपसंहारः

अनभिहिताधिकारमूलकः एव प्रयोगः त्रिधा - कर्तरिप्रयोगः, कर्मणिप्रयोगः, भावेप्रयोगः चेति । [कर्तरि प्रयोगः = कर्त्रर्थे तिङः कृतः वा प्रयोगः । कर्मणि प्रयोगः = कर्मार्थे तिङः कृतः वा प्रयोगः । भावे प्रयोगः = भावार्थे तिङः कृतः वा प्रयोगः ।]

१. कर्तरिप्रयोगः -

यदि तिङ्प्रत्ययेन कृत्प्रत्ययेन वा कर्ता अभिहितः भवति तदा कर्तृभूतात् प्रातिपदिकात् परा 'कर्तृकरणयोस्तृतीया' इति सूत्रेण तृतीयाविभक्तिः न प्रवर्तते । तदा कर्तरिप्रयोगस्य सम्भवः ।

यथा - सूदः तण्डुलं पचति । सूदः तण्डुलं पक्वान् ।

↑______कर्ता ↑______कर्ता

अत्र प्रथमवाक्ये 'ति'प्रत्ययेन, द्वितीयवाक्ये 'क्तवतु'प्रत्ययेन च कर्ता अभिहितः । अतः कर्तृभूतात् सूदात् न तृतीया । कर्तुः अभिहितत्वे अपि सूदरूपप्रातिपदिकार्थस्य सद्भावात् 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' इति सूत्रेण प्रथमा भवति ।

२. कर्मणिप्रयोगः

यदि तङ्प्रत्ययेन कृत्प्रत्ययेन वा कर्म अभिहितं भवति, तर्हि कर्मभूतात्

प्रातिपदिकात् परा द्वितीयाविभक्तिः न प्रवर्तते 'कर्मणि द्वितीया' इति सूत्रेण । तदा कर्मणिप्रयोगस्य (कर्मवाच्यस्य) सम्भवः ।
यथा – सूदेन तण्डुलः पच्यते । सूदेन तण्डुलः पक्वः ।
कर्म कर्म

अत्र प्रथमवाक्ये 'ते' इति प्रत्ययेन, द्वितीयवाक्ये 'क्त'प्रत्ययेन च कर्म अभिहितम् । अतः कर्मभूतात् तण्डुलात् न द्वितीया । कर्मणः अभिहितत्वे अपि तण्डुलरूपप्रातिपदिकार्थस्य सद्भावात् – 'प्रातिपदिकार्थलिङ्गपरिमाण-वचनमात्रे प्रथमा' इति सूत्रेण प्रथमा भवति ।

३. भावेप्रयोगः

यदि तङ्प्रत्ययेन कृत्प्रत्ययेन वा भावः (धात्वर्थः = व्यापारः) अभिहितः भवति, न तु कर्ता, तदा कर्तृभूतात् प्रातिपदिकात् 'कर्तृकरणयोस्तृतीया' इति सूत्रेण विहिता तृतीया प्रवर्तते एव । यतो हि कर्ता अनभिहितः अत्र । एवञ्च भावेप्रयोगस्य सम्भवः ।
यथा – बालेन हस्यते । बालेन हसितम् ।
भावः भावः

अत्र प्रथमवाक्ये 'ते' इति प्रत्ययेन, द्वितीयवाक्ये 'क्त'प्रत्ययेन च भावः अभिहितः । कर्ता तु केनापि न अभिहितः । अतः 'कर्तृकरणयोस्तृतीया' (अनभिहिते कर्तरि करणे च तृतीया स्यात् इति सूत्रार्थः) इति सूत्रेण कर्तृभूतात् बालात् तृतीया भवति ।

## (ख) विभक्तयः

| | *एकवचनम्* | *द्विवचनम्* | *बहुवचनम्* |
|---|---|---|---|
| प्रथमा | सु | औ | जस् |
| द्वितीया | अम् | औट् | शस् |
| तृतीया | टा | भ्याम् | भिस् |
| चतुर्थी | ङे | भ्याम् | भ्यस् |
| पञ्चमी | ङसि | भ्याम् | भ्यस् |
| षष्ठी | ङस् | ओस् | आम् |
| सप्तमी | ङि | ओस् | सुप् |

# २. विभक्तिः

विभक्तीनां प्रवृत्तौ कारकं प्राधान्यम् आवहति । कारकसंज्ञां पुरस्कृत्य या विभक्तिः प्रवर्तते सा कारकविभक्तिः इति उच्यते । यथा - ग्रामं गच्छति । अत्र द्वितीया कर्मकारकसंज्ञां पुरस्कृत्य प्रवृत्ता । अतः एषा कारकविभक्तिः ।

यत्र कारकत्वस्य न प्रसक्तिः तत्र परिगणितानां केषाञ्चन पदानाम् अर्थेन योगोऽपि विभक्तेः प्रवृत्तौ निमित्तं भवति । यथा - हरिं विना सुखं नास्ति । अत्र 'विना' इत्यस्य अर्थेन युक्तः हरिः । विना इत्यस्य अर्थेन योगादेव हरिशब्दात् द्वितीया प्रवृत्ता । अतः एषा उपपदविभक्तिः इति उच्यते ।

प्रथमायाः प्रवृत्तौ निमित्तं प्रातिपदिकार्थः सम्बोधनञ्च । यथा - उच्चैः गृहम् । हे राम ।

स्वस्वामिभावादिसम्बन्धोऽपि विभक्तिप्रवृत्तौ निमित्तम् । यथा - राज्ञः पुरुषः । अत्र राजपदात् षष्ठी श्रूयते । सा षष्ठी स्वस्वामिभावसम्बन्धं पुरस्कृत्य प्रवृत्ता ।

कारकविभक्तयः द्वितीया, तृतीया, चतुर्थी, पञ्चमी, सप्तमी चेति पञ्च सन्ति । कृद्योगे कर्तरि कर्मणि च प्रवर्तमाना (न तु सम्बन्धं पुरस्कृत्य प्रवर्तमाना) षष्ठी अपि (श्लोकस्य पठनम् इत्यादौ) कारकविभक्तिः एव । तृतीयाविभक्तिः कर्तरि, करणे च प्रवर्तते इति विशेषः । उपपदविभक्तयः अपि ताः एव द्वितीया, तृतीया, चतुर्थी, पञ्चमी, सप्तमी चेति । यथा - कृष्णम् अभितः गावः । अक्ष्णा काणः । सर्वेभ्यः स्वस्ति । कृष्णात् अन्यः अयम् । मातरि साधुः इति ।

कर्मप्रवचनीयः इति काचित् संज्ञा । सा संज्ञापि द्वितीयायाः पञ्चम्याः सप्तम्याः च प्रवृत्तौ निमित्तं भवति । यथा - वृक्षं प्रति विद्योतते विद्युत् । आ हिमालयात् । अधि भुवि रामः इति । वस्तुतस्तु उपपदविभक्तौ एव अस्य अन्तर्भावः ।

पाणिनेः अयं क्रमः । आदौ अपादानादिकारकसंज्ञां विधत्ते 'ध्रुवमपायेऽपादानम् - १.४.२४' इत्यादिना सूत्रेण प्रथमाध्याये चतुर्थपादे । ततो विभक्तिं विधत्ते 'कर्मणि द्वितीया' इत्यादिना सूत्रेण द्वितीयाध्याये तृतीयपादे । तत्रैव उपपदविभक्तिं षष्ठी विभक्तिश्च विधत्ते । प्रथमाविभक्तिं प्रातिपदिकार्थं पुरस्कृत्य विधत्ते, याम् एतां प्रथमां 'षष्ठी शेषे - २.३.५०' इति सूत्रात्प्राक् प्राह ।

एवञ्च 'आदौ कारकं निश्चेतव्यम् । ततो विभक्तिः विधेया' इत्येषः क्रमः कारकविभक्तौ इति ज्ञेयम् ।

तथा च विभक्तेः प्रवृत्तौ एतानि निमित्तानि –

१. कारकम्

२. पदार्थयोगः (उपपदम्)

३. प्रातिपदिकार्थः

४. स्वस्वामिभावादिः सम्बन्धः

५. कर्मप्रवचनीयः

विभक्तिः

* * *

# ३. प्रथमाविभक्तिः

**१. गौः गोष्ठम् आगच्छति । छात्रेण श्लोकः पठ्यते ।**

प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा - २.३.४६ नियतोपस्थितिकः प्रातिपदिकार्थः । मात्रशब्दस्य प्रत्येकं योगः । प्रातिपदिकार्थमात्रे, लिङ्गमात्राद्याधिक्ये, सङ्ख्यामात्रे च प्रथमा स्यात् ।

प्रवृत्तिनिमित्तं व्यक्तिश्च प्रातिपदिकार्थः । यथा - 'वृक्ष' इति प्रातिपदिकस्य वृक्षत्वविशिष्टः वृक्षः इत्यर्थः । अत्र वृक्षत्वं प्रवृत्तिनिमित्तम् । वृक्षः व्यक्तिः । एतादृशे प्रातिपदिकार्थे प्रथमा स्यात् ।

**i. गौः गोष्ठम् आगच्छति । (गौः गोष्ठम् आगच्छति)**

कर्म (गोष्ठम्) कर्ता (आगच्छति)

अत्र 'गो' इति प्रातिपदिकस्य अर्थः गोत्वविशिष्टः गौः इति । अत्र गोशब्दात् प्रथमा ।

**ii. छात्रेण श्लोकः पठ्यते । (छात्रेण श्लोकः पठ्यते)**

कर्ता (छात्रेण) कर्म (पठ्यते)

अत्र 'श्लोक' इति प्रातिपदिकस्य अर्थः श्लोकत्वविशिष्टश्लोकः इति । अतः श्लोकशब्दात् प्रथमा ।

**इदमत्र अवधेयम्** - 'गौः गोष्ठम् आगच्छति' इत्यत्र गौः कर्ता । तथापि कर्तृकरणयोस्तृतीया - २.३.१८ इति सूत्रेण तृतीया न प्रवर्तते । कुतः ? कर्तरि अनभिहिते एव (अनुक्ते) तृतीयायाः विधानात्, न तु अभिहिते । यथा - गवा गोष्ठं गम्यते इति । 'गौः गोष्ठम् आगच्छति' इत्यत्र तु 'ति'प्रत्ययेन (आगच्छति) कर्तुः अभिहितत्वात् (उक्तत्वात्) न तृतीया । किन्तु प्रथमा प्रवर्तते । कुतः ? कर्तुः अभिहितत्वेऽपि प्रातिपदिकार्थस्य सद्भावात् । प्रथमायाः निमित्तं प्रातिपदिकार्थो ननु । एवं 'छात्रेण श्लोकः पठ्यते' इत्यत्रापि । अत्र श्लोकः कर्म । तथापि कर्मणि द्वितीया - २.३.२ इति सूत्रेण द्वितीया न प्रवर्तते । कुतः ? कर्मणि अनभिहिते (अनुक्ते) एव द्वितीयायाः विधानात्, न तु अभिहिते । यथा - 'छात्रः श्लोकं पठति' इति । 'छात्रेण श्लोकः पठ्यते' इत्यत्र तु

'ते' इति प्रत्ययेन (पठ्य + ते → कर्म) कर्मणः अभिहितत्वात् (उक्तत्वात्) न द्वितीया । किन्तु प्रथमा प्रवर्तते । कुतः ? कर्मणः अभिहितत्वेऽपि प्रातिपदिकार्थस्य सद्भावात् । प्रातिपदिकार्थो हि प्रथमायाः प्रवृत्तौ निमित्तम् । 'उच्चैर्गृहम्' इत्यादौ अव्ययादपि अनेनैव सूत्रेण प्रथमा भवति ।

लिङ्गं, परिमाणं, वचनं चेति त्रीणि पदानि पुनः सन्ति । तानि नेह व्याख्यायन्ते ।

२. हे राम ! मां पाहि ।

सम्बोधने च - २.३.४७ इह प्रथमा स्यात् ।

सम्बोधनम् = अभिमुखीकृत्य ज्ञापनम् । प्रातिपदिकार्थेन सह सम्बोधनेऽधिके गम्यमाने अपि प्रथमा स्यादिति सूत्रस्य फलितोऽर्थः ।

'हे राम ! मां पाहि ।'

'राम' इति प्रातिपदिकम् । अत्र प्रातिपदिकार्थेन सह सम्बोधनार्थः अधिकतया गम्यते । तथापि रामशब्दात् प्रथमा स्यात् प्रकृतसूत्रेण ।

* * *

# ४. द्वितीयाविभक्तिः

कारकद्वितीया, उपपदद्वितीया, चेति द्वितीया द्विविधा । कर्मसंज्ञां पुरस्कृत्य प्रवर्तमाना द्वितीया **कारकद्वितीया** । [1]परिगणितपदानां योगमात्रेण प्रवर्तमाना द्वितीया **उपपदद्वितीया** । कर्मप्रवचनीयसंज्ञां पुरस्कृत्य प्रवर्तमाना द्वितीया **कर्मप्रवचनीय-द्वितीया** । एषा उपपदद्वितीयायाम् एव अन्तर्भवति ।

**कर्मणि द्वितीया - २.३.२** अनुक्ते कर्मणि द्वितीया स्यात् । द्वितीयाविभक्ति-विधायकं सूत्रमिदम् । कर्मणि द्वितीया भवतीति अनेन सूत्रेण उच्यते । किं तर्हि कर्म ? इत्याकाङ्क्षायां अष्टभिः सूत्रैः कैश्चित् वार्तिकैश्च कर्मसंज्ञा अभिधीयते । एतैः सूत्रैः इदं कर्मेति निर्णये जाते प्रकृतसूत्रेणैव द्वितीया प्रवर्तनीया । अतः कर्मसंज्ञा-विधायकानि सूत्राणि बहूनि, कर्मसंज्ञाम् अवलम्ब्य द्वितीयाविधायकं तु एकमेव सूत्रम् । (उपपदद्वितीयाविधायकानि सूत्राणि वार्तिकानि च अन्यानि सन्ति ।) अतः येन येन सूत्रेण कर्मसंज्ञा विधीयते तत्र तत्र कर्मणि द्वितीयेति एकेनैव सूत्रेण द्वितीया प्रवर्तते इति ज्ञेयम् । सर्वासु कारकविभक्तिषु एषैव सरणिः आदृता पाणिनिना इति स्मरणीयम् ।

## (अ) कारकद्वितीया

**१. पाचकः तण्डुलान् पचति ।**

**कर्तुरीप्सिततमं कर्म - १.४.४९** कर्तुः क्रियया आप्तुम् इष्टतमं कारकं कर्मसंज्ञं स्यात् ।

'पाचकः तण्डुलान् पचति' इत्यत्र पाचकः कर्ता । तस्य पाकक्रियया आप्तुम् इष्टतमः तण्डुलः कर्म । अतः कर्मभूतात् तण्डुलात् कर्मणि द्वितीयेति द्वितीया भवति । (चतुर्थं (४) पृष्ठं पश्यन्तु)

**२. पान्थः ग्रामं गच्छन् तृणं स्पृशति । विषं भुङ्क्ते ।**

**तथायुक्तञ्चानीप्सितम् - १.४.५०** ईप्सिततमवत्क्रियया युक्तम् अनीप्सितमपि कारकं कर्मसंज्ञं स्यात् ।

---

१. परिगणितानां पदानां यः अर्थः, तेन अर्थेन अन्वितार्थस्य वाचकात् प्रवर्तमाना विभक्तिः उपपदविभक्तिः । (तदर्थान्वितार्थवाचकात् विभक्तिः) यथा - मार्गम् उभयतः वृक्षाः । उभयतः इत्यस्य अर्थेन अन्वितार्थः पन्थाः । तद्वाचकः मार्गः । तस्मात् द्वितीया ।

ईप्सिततमं कर्म भवति इति पूर्वसूत्रेण उक्तम् । अनीप्सितम् अपि कर्म भवति । तत् कथम् ? तदित्थम् – 'भक्तः गङ्गां स्पृशति' इत्यादौ, यथा भक्तस्य स्पर्शनक्रियाजन्यसंयोगः गङ्गायां भवति, तथैव 'पान्थः ग्रामं गच्छन् तृणं स्पृशति' इत्यादौ अपि पान्थस्य स्पर्शनक्रियाजन्यसंयोगः तृणे भवति, किन्तु पूर्वत्र गङ्गां स्पृशामि इति भक्तस्य इच्छा अस्ति, अतो गङ्गा ईप्सिततमा, 'तृणं स्पृशति' इत्यत्र तु पान्थस्य तृणं स्पृशामि इति इच्छा नास्ति, तथापि क्रियाजन्यसंयोगरूप-फलाश्रयत्वात् तृणं कर्मसंज्ञां प्राप्नोति । ईप्सिततमवत् सर्वम् अत्र भवति इच्छां विना इत्यर्थः । 'पान्थः ग्रामं गच्छन् तृणं स्पृशति' इत्यत्र ग्रामः ईप्सिततमः एव इति 'कर्तुरीप्सिततमं कर्म' इति सूत्रेणैव कर्मसंज्ञां प्राप्नोति । तृणं तु उदासीनम् यतः तृणस्पर्शः गमनसमये नान्तरीयकतया भवति, न तु पान्थस्य इच्छया । तथापि स्पर्शजन्यसंयोगः अस्ति इति अनेन सूत्रेण तृणं कर्मसंज्ञां प्राप्नोति । ततो द्वितीया । अत्र तृणस्य उदासीनत्वेऽपि इच्छां वर्जयित्वा ईप्सिततमवत् सर्वम् अस्ति इति कर्मसंज्ञा भवतीति ज्ञेयम् ।

**'देवदत्तः विषं भुङ्क्ते'** इति तु यदा वैरिणा निगृह्यमाणः अनिच्छन् अपि विषं भुङ्क्ते तदा इदम् उदाहरणम् । 'देवदत्तः ओदनं भुङ्क्ते' इत्यत्र भुजधातोः अर्थः गलबिलाधःसंयोगरूपं फलं, तदनुकूलव्यापारश्च । गलबिलाधःसंयोगरूप-फलाश्रयत्वेन इष्यमाणः ओदनः । अतस्तस्य कर्मसंज्ञा यथा भवति, तथैव 'विषं भुङ्क्ते' इत्यत्रापि इच्छायाः अभावे अपि गलबिलाधःसंयोगरूपफलाश्रयत्वात् विषस्य कर्मसंज्ञा अनेन सूत्रेण भवति । ततो द्वितीया । अत्र विषस्य द्वेष्यत्वे अपि इच्छां वर्जयित्वा ईप्सिततमवत् सर्वमस्ति इति कर्मसंज्ञा भवतीति ज्ञेयम् ।

३. **गोपालः गां दोग्धि पयः । वामनः बलिं याचते वसुधाम् । पान्थः माणवकं पन्थानं पृच्छति । गुरुः बालं धर्मं ब्रूते । कृषीवलः अजां ग्रामं नयति ।**

अकथितञ्च – १.४.५१ अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात् । द्विकर्मकस्थले सूत्रस्यास्य प्रवृत्तिः । अस्य प्रवृत्तिः यत्र भवति तत्र 'कर्तुरीप्सिततमं कर्म' इति सूत्रेण एव सिद्धं प्रधानं कर्म अन्यत् भवत्येव । तादृशकर्मणा युक्तम् अपादानं, सम्प्रदानम्, अधिकरणं वा भवति । तत्र अपादानत्वेन अविवक्षित्वा कर्मत्वेन विवक्षायां कर्मसंज्ञा भवति । अनेन सूत्रेण यस्य कर्मसंज्ञा तद्गौणं कर्म इति उच्यते ।

**i. गोपालः गां दोग्धि पयः ।**

दुहधातोः अर्थः द्रवद्रव्यविभागरूपं फलं, तदनुकूलव्यापारश्च । विभागरूप-फलाश्रयत्वात् पयसः 'कर्तुरीप्सिततमं कर्म' इत्यनेन कर्मत्वम् । अतः एव

अस्य मुख्यकर्मत्वम् । गोस्तु अवधित्वात् अपादानत्वम् । तदपादानत्वस्य अविवक्षायां कर्मत्वम् अनेन विवक्ष्यते । अतः एव गोः अप्रधानकर्मत्वम् । ततः उभयत्रापि द्वितीया 'कर्मणि द्वितीया' इति सूत्रेण । गोः यदि अपादानत्वेन विवक्षा तदा 'गोपालः गोः पयः दोग्धि' इति प्रयोगः सम्भवति ।

ii. वामनः बलिं याचते वसुधाम् ।

याच्धातोः अर्थः परस्वत्व-निवृत्तिपूर्वक-स्वस्वत्वोत्पत्तिरूपं फलं, तदनुकूलव्यापारश्च । स्वस्वत्वोत्पत्तिरूपफलाश्रयत्वात् वसुधायाः 'कर्तुरीप्सिततमं कर्म' इत्यनेनैव कर्मत्वम् । अतः वसुधायाः मुख्यकर्मत्वम् । बलेः तु अवधित्वात् अपादानत्वम् । तदपादानत्वस्य अविवक्षायां कर्मत्वम् अनेन विवक्ष्यते । अतः बलेः अप्रधानकर्मत्वम् । ततः उभयत्रापि द्वितीया भवति 'कर्मणि द्वितीया' इति सूत्रेण । अपादानत्वम् एव यदि विवक्ष्यते तदा 'वामनः बलेः वसुधां याचते' इति प्रयोगः सम्भवति ।

iii. पान्थः माणवकं पन्थानं पृच्छति ।

प्रच्छ्धातोरर्थः जिज्ञासितव्यार्थज्ञानरूपं फलम्, तदनुकूलः केन पथा गन्तव्यमिति अभिलापादिरूपव्यापारश्च । ज्ञानरूपफलाश्रयत्वात् (विषयतासम्बन्धेन) पथः 'कर्तुरीप्सिततमं कर्म' इत्यनेनैव कर्मत्वम् । माणवकस्य तु अवधित्वात् अपादानत्वम् । तदपादनत्वस्य अविवक्षायां कर्मत्वम् अनेन विवक्ष्यते । अतः माणवकस्य अप्रधानकर्मत्वम् । ततः उभयत्रापि द्वितीया । अपादानत्वमेव यदि विवक्ष्यते तदा 'माणवकात् पन्थानं पृच्छति' इति प्रयोगः सम्भवति ।

iv. गुरुः बालं धर्मं ब्रूते ।

ब्रूधातोः अर्थः ज्ञानरूपं फलं, तदनुकूलः शब्दप्रयोगरूपः व्यापारश्च । (विषयतासम्बन्धेन) ज्ञानरूपफलाश्रयत्वात् धर्मस्य 'कर्तुरीप्सिततमं कर्म' इत्यनेनैव कर्मत्वम् । बालस्य तु कर्मभूतधर्मेण अभिप्रेयमाणत्वात् सम्प्रदानत्वम् । सम्प्रदानत्वस्य अविवक्षायां बालस्य अनेन कर्मत्वम् । ततः उभयत्रापि द्वितीया 'कर्मणि द्वितीया' इति सूत्रेण । बालस्य यदि सम्प्रदानत्वेन विवक्षा तदा 'गुरुः बालाय धर्मं ब्रूते' इति प्रयोगः सम्भवत्येव ।

v. कृषीवलः अजां ग्रामं नयति ।

नीधातोः अर्थः प्राप्तिरूपं फलं, तदनुकूलयोग्यमार्गसंयोजनादिरूप-व्यापारश्च । प्राप्तिरूपफलाश्रयत्वात् अजायाः 'कर्तुरीप्सिततमं कर्म'

इत्यनेनैव कर्मत्वम् । अजायाः आधारत्वात् ग्रामः अधिकरणम् । ग्रामस्य अधिकरणत्वाविवक्षायाम् अनेन कर्मत्वम् । ततः उभयत्रापि द्वितीया 'कर्मणि द्वितीया' इति सूत्रेण । यदि ग्रामस्य अधिकरणत्वं विवक्ष्यते तदा 'कृषीवलः ग्रामे अजां नयति' इति प्रयोगः सम्भवति ।

**इदमवधेयम् –**

एते द्विकर्मकधातवः –

दोग्धि । याचते । पचति । दण्डयति । रुणद्धि । पृच्छति । चिनोति । ब्रूते । शास्ति । जयति । मथ्नाति । मुष्णाति । नयति । हरति । कर्षति । वहति ।

एतदर्थकधातवः अपि द्विकर्मकाः एव । यथा – भिक्षते । भाषते । वक्ति इत्यादयः । एते धातवः अस्यां कारिकायां सङ्गृहीताः –

दुह्याच्पच्दण्डरुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् ।
कर्मयुक् स्यादकथितं तथा स्यान्नीहकृष्वहाम् ।। इति ।

**४. छात्रः सप्ताहं वसति । सः गोदोहं तिष्ठति ।**

'अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्' (वा) । अकर्मकधातुभिः योगे कुरुपाञ्चालादिदेशवाचकः, माससंवत्सरादिकालवाचकः, क्रियावाचकः, क्रोशादिमार्गपरिमाणवाचकश्च कर्मसंज्ञां प्राप्नोति ।

**i. छात्रः सप्ताहं वसति ।**

वस्धातुः अकर्मकः । तथापि तद्योगे सप्ताहस्य कर्मत्वं भवति । ततो द्वितीया 'कर्मणि द्वितीया' इति सूत्रेण । सप्ताहशब्दः कालवाचकः ।

**ii. सः गोदोहं तिष्ठति ।**

स्थाधातुः अकर्मकः । तथापि तद्योगे गोदोहस्य कर्मत्वम् । ततो द्वितीया 'कर्मणि द्वितीया' इति सूत्रेण । गोदोहशब्दः क्रियावाचकः । प्रकृतवाक्ये तु गोदोहनकालः विवक्षितः गोदोहशब्देन । अतो गोदोहनकालं तिष्ठतीत्यर्थः गोदोहं तिष्ठति इत्यस्य ।

**इदमत्र ज्ञेयम्** – सप्ताहोऽपि कालवाचकः । गोदोहोऽपि अन्ते कालवाचकः एव । अतः किमर्थम् उभयोः उपादानम् इति ? अत्र कालशब्देन लोके कालत्वेन प्रसिद्धस्यैव ग्रहणम् । गोदोहस्तु न तथा ।

**५. i. बालः विद्यालयं गच्छति । पिता बालं विद्यालयं गमयति ।**

**ii. छात्रः श्लोकार्थं बोधति । गुरुः छात्रं श्लोकार्थं बोधयति ।**

iii. शिशुः ओदनं भुङ्क्ते । माता शिशुम् ओदनं भोजयति ।

iv. बालः गद्यं पठति । अध्यापकः बालं गद्यं पाठयति ।

v. वृद्धः उपविशति । तरुणः वृद्धम् उपवेशयति ।

गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ - १.४.५२ गत्याद्यर्थानां शब्दकर्मणाम् अकर्मकाणां च अणौ यः कर्ता स णौ कर्म स्यात् । गतिः = गमनम् । बुद्धिः = अवगमनम् । प्रत्यवसानं = भक्षणम् । शब्दकर्म = यस्य धात्वर्थस्य शब्दः एव (श्लोकः, गद्यं, मन्त्रः इत्येवमादयः) कर्म । अकर्मकः = यस्य धात्वर्थस्य कर्म एव न सम्भवति स इति सूत्रगतपदानाम् अर्थः ।

**इदमत्र अवगन्तव्यम् -**

धातुगणे पठिताः धातवः शुद्धधातवः इति उच्यन्ते । यथा - गच्छति, पठति इत्यादौ प्रकृतिभूतो धातुः । अतः अत्र 'गम्' इति 'पठ्' इति च शुद्धो धातुः इति उच्यते । शुद्धधातुः एव अण्यन्तः इत्यपि व्यवह्रियते । शुद्धेभ्यो धातुभ्यः प्रेरणार्थे णिच्प्रत्ययो विधीयते । तदा ते धातवः ण्यन्ताः (णिच्प्रत्ययान्ताः) भवन्ति । यथा - गमयति, पाठयति, भोजयति इत्यादौ प्रकृतिभूतो धातुः णिच्सहितः । अतोऽत्र 'गमि' इति, 'पाठि' इति, 'भोजि' इति, णिच्प्रत्ययेन सहिताः इति कृत्वा ण्यन्ताः इति उच्यन्ते । चुरादिरपि शुद्धधातुरेव ।

अण्यन्तानां धातूनां कर्ता **'प्रयोज्यकर्ता'** इति उच्यते । ण्यन्तानां धातूनां कर्ता **'प्रयोजककर्ता'** इति व्यवह्रियते । यथा - 'बालः विद्यालयं गच्छति' इत्यत्र बालः प्रयोज्यकर्ता । 'पिता बालं विद्यालयं गमयति' इत्यत्र पिता प्रयोजककर्ता ।

एवञ्च गत्यर्थकानाम्, अवगमनार्थकानां, भक्षणार्थकानां, शब्दकर्मकाणाम्, अकर्मकाणाञ्च प्रयोज्यकर्ता, प्रयोजककर्तुः क्रियां प्रति कर्मसंज्ञको भवति इति सूत्रस्य फलितोऽर्थः ।

i. **बालः विद्यालयं गच्छति । पिता बालं विद्यालयं गमयति ।**

अत्र प्रथमवाक्ये अण्यन्तस्य (शुद्धधातोः) कर्ता बालः । अतः सः प्रयोज्यकर्ता । द्वितीये वाक्ये ण्यन्तस्य (गमयति) कर्ता पिता । अतः प्रयोजककर्ता । गत्यर्थकधातुप्रयोगात् प्रयोजककर्तुः पितुः गमनप्रेरणक्रियां प्रति प्रयोज्यकर्ता बालः कर्म भवति प्रकृतसूत्रेण । विद्यालयस्य तु 'कर्तुरीप्सिततमम् ...' इति सूत्रेणैव कर्मसंज्ञा । उभयत्रापि 'कर्मणि द्वितीया' इति सूत्रेण द्वितीया ।

ii. **छात्रः श्लोकार्थं बोधति । गुरुः छात्रं श्लोकार्थं बोधयति ।**

अत्र प्रथमवाक्ये छात्रः प्रयोज्यकर्ता । द्वितीयवाक्ये गुरुः प्रयोजककर्ता ।

बुध्यर्थकधातोः (अवगमनार्थकधातोः) प्रयोगात् प्रयोजककर्तुः गुरोः प्रेरणक्रियां प्रति प्रयोज्यकर्ता छात्रः कर्म भवति प्रकृतसूत्रेण । श्लोकार्थस्य तु 'कर्तुरीप्सिततमं...' इति सूत्रेणैव कर्मसंज्ञा । उभयत्रापि ततो द्वितीया 'कर्मणि द्वितीया' इति सूत्रेण ।

iii. **शिशुः ओदनं भुङ्क्ते । माता शिशुम् ओदनं भोजयति ।**

अत्र प्रथमवाक्ये शिशुः प्रयोज्यकर्ता । द्वितीयवाक्ये माता प्रयोजककर्त्री । भक्षणार्थकधातोः प्रयोगात् प्रयोजककर्त्र्याः भोजनप्रेरणक्रियां प्रति प्रयोज्यकर्ता शिशुः कर्म भवति प्रकृतसूत्रेण । ओदनस्य तु 'कर्तुरीप्सिततमं कर्म' इति सूत्रेणैव कर्मसंज्ञा । उभयत्रापि ततो द्वितीया 'कर्मणि द्वितीया' इति सूत्रेण ।

iv. **बालः गद्यं पठति । अध्यापकः बालं गद्यं पाठयति ।**

अत्र प्रथमवाक्ये बालः प्रयोज्यकर्ता । द्वितीयवाक्ये प्रयोजककर्ता अध्यापकः । शब्दकर्मकधातोः (शब्दकर्मको नाम कः ? – श्लोकः, गद्यं, मन्त्रः इत्येवमादयः शब्दात्मकाः । श्लोकादिषु शब्दसमूहो ननु भवति ? श्लोकादयः यदि धातोः कर्म भवन्ति तर्हि सः धातुः शब्दकर्मकः इत्युच्यते ।) प्रयोगात् प्रयोजककर्तुः अध्यापकस्य प्रेरणक्रियां प्रति प्रयोज्यकर्ता बालः कर्म भवति प्रकृतसूत्रेण । गद्यस्य तु 'कर्तुरीप्सिततमं कर्म' इति सूत्रेणैव कर्मसंज्ञा भवति । उभयत्रापि ततो द्वितीया 'कर्मणि द्वितीया' इति सूत्रेण ।

v. **वृद्धः उपविशति । तरुणः वृद्धम् उपवेशयति ।**

अत्र प्रथमवाक्ये वृद्धः प्रयोज्यकर्ता । द्वितीये वाक्ये तरुणः प्रयोजककर्ता । अकर्मकधातोः प्रयोगात् प्रयोजककर्तुः तरुणस्य प्रेरणक्रियां प्रति प्रयोज्यकर्ता वृद्धः कर्म भवति प्रकृतसूत्रेण । ततो द्वितीया 'कर्मणि द्वितीया' इति सूत्रेण ।

६. i. **विद्यार्थी किमपि जल्पति / विलपति / आभाषते ।**
**गुरुः विद्यार्थिनं किमपि जल्पयति / विलापयति / आभाषयति ।**

ii. **शिशुः शुकं पश्यति । पिता शिशुं शुकं दर्शयति ।**

'जल्पतिप्रभृतीनामुपसङ्ख्यानम्' (वा), 'दृशेश्च' (वा) जल्पति, विलपति, आभाषते, पश्यति इत्येतेषां प्रयोज्यकर्ता, प्रयोजककर्तुः क्रियां प्रति कर्म भवति इत्यर्थः ।

i. विद्यार्थी किमपि जल्पति / विलपति / आभाषते ।

गुरुः विद्यार्थिनं किमपि जल्पयति / विलापयति / आभाषयति ।

अत्र प्रथमवाक्ये प्रयोज्यकर्ता विद्यार्थी । द्वितीयवाक्ये प्रयोजककर्ता गुरुः । जल्पत्यादीनां प्रयोगात् प्रयोजककर्तुः गुरोः प्रेरणक्रियां प्रति प्रयोजककर्ता विद्यार्थी कर्म भवति 'जल्पतिप्रभृति...' इति वार्तिकेन । किम् इत्यस्य तु 'कर्तुरीप्सिततमं कर्म' इत्यनेनैव कर्मत्वम् । ततः उभयत्रापि द्वितीया 'कर्मणि द्वितीया' इति सूत्रेण ।

ii. शिशुः शुकं पश्यति । पिता शिशुं शुकं दर्शयति ।

अत्र प्रथमवाक्ये शिशुः प्रयोज्यकर्ता । द्वितीयवाक्ये पिता प्रयोजककर्ता । दृश्धातोः प्रयोगात् प्रयोजककर्तुः पितुः प्रेरणक्रियां प्रति, प्रयोज्यकर्ता शिशुः कर्म भवति 'दृशेश्च' इति वार्तिकेन । शुकस्य तु 'कर्तुरीप्सिततमं कर्म' इत्यनेनैव कर्मत्वम् । ततः उभयत्रापि द्वितीया 'कर्मणि द्वितीया' इति सूत्रेण ।

७. i. भृत्यः भारं वहति/नयति । स्वामी भृत्येन भारं वाहयति/नाययति ।

ii. बालः अन्नं खादति/अत्ति/भक्षयति । माता बालेन अन्नं खादयति/आदयति/भक्षयति ।

iii. बालः शब्दायते । माता बालेन शब्दापयति ।

नीवह्योर्न (वा) आदिखाद्योर्न (वा) भक्षेरहिंसार्थस्य न (वा) शब्दायतेर्न (वा) नियन्तृकर्तृकवहधातुं, हिंसार्थकभक्षधातुं च वर्जयित्वा - नयति, वहति, अत्ति, खादति, भक्षयति इत्येतेषां प्रयोज्यकर्ता, प्रयोजककर्तुः क्रियां प्रति कर्म न भवति इति वार्तिकानामर्थः । नयति, वहति इत्यनयोः गत्यर्थकत्वात्, अत्ति, खादति, भक्षयति इत्येतेषां भक्षणार्थकत्वात् शब्दायते इत्यस्य अकर्मकत्वात् प्रयोज्यकर्तुः 'गतिबुद्धि...' इति सूत्रेण प्राप्तं कर्मत्वम् एतैः वार्तिकैः निषिध्यते ।

i. भृत्यः भारं वहति / नयति । स्वामी भृत्येन भारं वाहयति / नाययति ।

अत्र प्रथमवाक्ये भृत्यः प्रयोज्यकर्ता । द्वितीयवाक्ये स्वामी प्रयोजककर्ता । वह्धातोः नीधातोः च प्रयोगात् प्रयोजककर्तुः स्वामिनः प्रेरणक्रियां प्रति प्रयोज्यकर्ता भृत्यः कर्म न भवति 'नीवह्योर्न' इति वार्तिकेन । कर्मत्वाभावादेव प्रयोज्यकर्तुः द्वितीयापि न । किन्तु प्रयोज्यकर्तुः कर्तृत्वस्य सद्भावात् 'कर्तृकरणयोस्तृतीया - २.३.१८' इति सूत्रेण तृतीयैव ।

ii. **बालः अन्नं खादति/अत्ति/भक्षयति । माता बालेन अन्नं खादयति/आदयति/भक्षयति ।**

iii. **बालः शब्दायते । माता बालेन शब्दापयति ।**

अत्र उभयत्रापि बालः प्रयोज्यकर्ता । माता प्रयोजककर्त्री । आदिखाद्योर्न (वा) भक्षेरहिंसार्थस्य न (वा) इति वार्तिकाभ्यां प्रयोज्यकर्तुः बालस्य कर्मत्वनिषेधः । अतो न द्वितीया । प्रयोज्यकर्तुः कर्तृत्वस्य सद्भावात् 'कर्तृकरणयोस्तृतीया' इति तृतीया एव ।

८. i. **कर्मकरः कटं करोति । स्वामी कर्मकरेण कटं कारयति/स्वामी कर्मकरं कटं कारयति ।**

ii. **देवदत्तः जलं हरति । पिता देवदत्तेन जलं हारयति/पिता देवदत्तं जलं हारयति ।**

हृक्रोरन्यतरस्याम् – १.४.५३ हृक्रोरणौ यः कर्ता स णौ वा कर्म स्यात् । हरति, करोति इत्यनयोः प्रयोज्यकर्ता, प्रयोजककर्तुः क्रियां प्रति विकल्पेन कर्म भवति ।

i. **कर्मकरः कटं करोति । स्वामी कर्मकरेण कटं कारयति/स्वामी कर्मकरं कटं कारयति ।**

अत्र प्रथमवाक्ये प्रयोज्यकर्ता कर्मकरः । द्वितीयवाक्ये प्रयोजककर्ता स्वामी । कृधातोः प्रयोगात् प्रयोजककर्तुः स्वामिनः प्रेरणक्रियां प्रति, प्रयोज्यकर्तुः कर्मकरस्य कर्मत्वाभावे द्वितीया न भवति । अपि तु तस्मिन् कर्तृत्वस्य सद्भावात् 'कर्तृकरणयोस्तृतीया – २.३.२८' इति तृतीया एव । तृतीयवाक्येऽपि प्रयोजककर्ता स्वामी एव । कृधातोः प्रयोगात् प्रयोजककर्तुः स्वामिनः प्रेरणक्रियां प्रति प्रयोज्यकर्ता कर्म भवति । कटस्तु 'कर्तुरीप्सिततमं कर्म' इत्यनेन एव कर्मसंज्ञां प्राप्नोति । ततः उभयत्रापि द्वितीया 'कर्मणि द्वितीया' इति सूत्रेण ।

ii. **देवदत्तः जलं हरति । पिता देवदत्तेन जलं हारयति/पिता देवदत्तं जलं हारयति ।**

अत्र प्रथमवाक्ये देवदत्तः प्रयोज्यकर्ता । द्वितीयवाक्ये पिता प्रयोजककर्ता । हृधातोः प्रयोगात् प्रयोजककर्तुः पितुः प्रेरणक्रियां प्रति प्रयोज्यकर्तुः देवदत्तस्य कर्मत्वाभावे द्वितीया न भवति, अपि तु तस्मिन् कर्तृत्वस्य सद्भावात् 'कर्तृकरणयोस्तृतीया – २.३.१८' इति तृतीयैव । तृतीयवाक्येऽपि प्रयोजककर्ता पिता एव । हृधातोः प्रयोगात् प्रयोजककर्तुः

पितुः प्रेरणक्रियां प्रति प्रयोज्यकर्ता कर्म भवति । जलं तु 'कर्तुरीप्सिततमं कर्म' इत्यनेन एव कर्मसंज्ञां प्राप्नोति । ततः उभयत्रापि द्वितीया 'कर्मणि द्वितीया' इति सूत्रेण ।

९. **पाचकः ओदनं पचति । स्वामी पाचकेन ओदनं पाचयति ।**

अत्र प्रथमवाक्ये प्रयोज्यकर्ता पाचकः । द्वितीयवाक्ये प्रयोजककर्ता स्वामी । प्रयोजककर्तुः स्वामिनः प्रेरणक्रियां प्रति प्रयोज्यकर्तुः पाचकस्य कर्मत्वं नास्ति । अतः द्वितीयापि नास्ति । किन्तु प्रयोज्यकर्तुरि पाचके कर्तृत्वस्य सद्भावात् 'कर्तृकरणयोस्तृतीया' इति तृतीया एव ।

**इदमवधेयम् -**

अस्मिन् पुस्तके 'गतिबुद्धि... -१.४.५२' इति सूत्रम् आरभ्य, 'हृक्रोरन्यतरस्याम् - १.४.५३' इति सूत्रान्तं ये धातवः परिगणय्य उक्ताः तेषां धातूनां प्रयोगे एव (तेषां धात्वर्थानाम्) प्रयोज्यकर्ता कर्मसंज्ञां प्राप्नोति, नान्येषां धातूनां प्रयोगे (अन्येषां धात्वर्थानाम्) प्रयोज्यकर्तुः कर्मत्वम् । 'स्वामी पाचकेन ओदनं पाचयति' इत्यत्र प्रयुक्तः पच्धातुः परिगणितेषु न अन्तर्भूतः । अतः प्रयोज्यकर्तुः पाचकस्य कर्मत्वं नास्ति । अतो द्वितीया अपि नास्ति । किन्तु कर्तृत्वस्य सद्भावात् तृतीयैव । एवं 'कर्मकरः कूपं खनति ।', 'स्वामी कर्मकरेण कूपं खानयति' इत्यादावपि प्रयोज्यकर्तुः कर्मकरस्य कर्मत्वं नास्ति । खन्धातोरपि परिगणितेषु अनन्तर्भूतत्वात् ।

१०. **हरिः वैकुण्ठम् अधिशेते । अध्यापकः विद्यालयम् अधितिष्ठति । छात्रः छात्रावासम् अध्यास्ते ।**

अधिशीङ्स्थासां कर्म - १.४.४६ अधिपूर्वाणाम् एषाम् आधारः कर्म स्यात् । 'अधि' इत्युपसर्गपूर्वकस्य शीङ्धातोः, स्थाधातोः, आस्धातोश्च आधारः कर्मसंज्ञां प्राप्नोति ।

i. **हरिः वैकुण्ठम् अधिशेते ।**

अत्र 'अधि' इत्युपसर्गपूर्वकः शीङ्धातुः प्रयुक्तः अधिशेते इति । शयनानुकूलव्यापारः अधिशेते इत्यस्यार्थः । हरिः अत्र कर्ता । कर्तृद्वारा शयनानुकूलव्यापारस्य आधारः वैकुण्ठः । अतोऽधिकरणसंज्ञा प्राप्ता वैकुण्ठस्य । ताम् अधिकरणसंज्ञां निषिद्ध्य प्रकृतसूत्रेण कर्मसंज्ञा विधीयते । अतः वैकुण्ठशब्दात् द्वितीया 'कर्मणि द्वितीया - २.३.२' इति सूत्रेण ।

ii. **अध्यापकः विद्यालयम् अधितिष्ठति ।**

अत्र 'अधि' इत्युपसर्गपूर्वकः स्थाधातुः प्रयुक्तः अधितिष्ठति इति ।

स्थित्यनुकूलव्यापारः अधितिष्ठति इत्यस्यार्थः । अध्यापकोऽत्र कर्ता । कर्तृद्वारा स्थित्यनुकूलव्यापारस्य आधारः विद्यालयः । अतोऽधिकरणसंज्ञा प्राप्ता विद्यालयस्य । ताम् अधिकरणसंज्ञां निषिद्ध्य प्रकृतसूत्रेण कर्मसंज्ञा विधीयते । अतो विद्यालयशब्दात् द्वितीया 'कर्मणि द्वितीया - २.३.२' इति सूत्रेण ।

iii. **छात्रः छात्रावासम् अध्यास्ते ।**

अत्र 'अधि' इत्युपसर्गपूर्वकः आस्धातुः प्रयुक्तः अध्यास्ते इति । स्थित्यनुकूलव्यापारः अध्यास्ते इत्यस्यार्थः । छात्रोऽत्र कर्ता । कर्तृद्वारा स्थित्यनुकूलव्यापारस्य आधारः छात्रावासः । अतः अधिकरणसंज्ञा प्राप्ता छात्रावासस्य । ताम् अधिकरणसंज्ञां निषिद्ध्य प्रकृतसूत्रेण कर्मसंज्ञा विधीयते । अतः छात्रावासशब्दात् द्वितीया 'कर्मणि द्वितीया - २.३.२' इति सूत्रेण ।

११. **बालः सन्मार्गम् अभिनिविशते ।**

अभिनिविशश्च - १.४.४८ 'अभिनि' इत्येतत्सङ्घातस्य विशतेः आधारः कर्म स्यात् ।

'अभि' इत्येकः उपसर्गः । 'नि' इति अपरः उपसर्गः । 'अभिनि' इति उपसर्गद्वयपूर्वकस्य (अभि + नि इत्येव विवक्षितं, न तु नि + अभि इति) विश्धातोः आधारः कर्मसंज्ञां प्राप्नोति ।

**बालः सन्मार्गम् अभिनिविशते ।**

अत्र 'अभिनि' इत्युपसर्गद्वयपूर्वकः विश्धातुः प्रयुक्तः अभिनिविशते इति । आग्रहानुकूलव्यापारः अभिनिविशते इत्यस्यार्थः । बालोऽत्र कर्ता । कर्तृद्वारा आग्रहानुकूलव्यापारस्य आधारः सन्मार्गः । अतः अधिकरणसंज्ञा प्राप्ता सन्मार्गस्य । ताम् अधिकरणसंज्ञां निषिद्ध्य प्रकृतसूत्रेण कर्मसंज्ञा विधीयते । अतः सन्मार्गशब्दात् द्वितीया 'कर्मणि द्वितीया - २.३.२' इति सूत्रेण ।
'पापे अभिनिवेशः', 'कल्याणे अभिनिवेशः' इत्यादिप्रयोगदर्शनात् क्वचित् द्वितीया न भवति । तत्रेदं कारणम् । 'अभिनिविशश्च' इत्यत्र पूर्वसूत्रात् 'अन्यतरस्याम्' इति अनुवृत्य व्यवस्थितविभाषाञ्च आश्रित्य क्वचिन्नेति व्यवस्था कृता व्याख्यानकारैः ।

१२. **बहवो नगरम् अधिवसन्ति । बालो गृहम् आवसति ।**

उपान्वध्याङ्वसः - १.४.४८ उपादिपूर्वस्य वसतेः आधारः कर्म स्यात् ।
उप-उपसर्गपूर्वकस्य, अनु-उपसर्गपूर्वकस्य, अधि-उपसर्गपूर्वकस्य आङ्-

उपसर्गपूर्वकस्य च वस्धातोः आधारः कर्म स्यात् ।

i. **बहवः नगरम् अधिवसन्ति ।**

अत्र 'अधि' – उपसर्गपूर्वकस्य वस्धातोः प्रयोगः कृतः । वासानुकूलव्यापारः अधिवसति इत्यस्यार्थः । बहवः अत्र वाक्ये कर्तारः । कर्तृद्वारा वासानुकूलव्यापारस्य आधारः नगरम् । अतोऽत्र नगरस्य अधिकरणसंज्ञा प्राप्ता । ताम् अधिकरणसंज्ञां निषिध्य प्रकृतसूत्रेण कर्मसंज्ञा विधीयते । अतः नगरशब्दात् द्वितीया 'कर्मणि द्वितीया' इति सूत्रेण ।

ii. **बालः गृहम् आवसति ।**

अत्र आङ्-उपसर्गपूर्वकः वसधातुः प्रयुक्तः । वासानुकूलव्यापारः 'आवसति' इत्यस्य अर्थः । बालोऽत्र कर्ता । कर्तृद्वारा वासानुकूलव्यापारस्य आधारः गृहम् । अतोऽत्र गृहस्य अधिकरणसंज्ञा प्राप्ता । ताम् अधिकरणसंज्ञां निषिद्ध्य प्रकृतसूत्रेण कर्मसंज्ञा विधीयते । अतो गृहशब्दात् द्वितीया 'कर्मणि द्वितीया' इति सूत्रेण । एवं 'बालः गृहम् अनुवसति', 'बालिका गृहम् उपवसति' इति प्रयोगोऽपि । उपवसति इत्यस्य वासं करोति, उपवासं करोति इत्यर्थद्वयम् अस्ति । तत्र वासं करोति इत्यर्थकधातोः योगे कर्मसंज्ञा भवति । उपवासं करोति इत्यर्थकवस्धातोः प्रयोगे तु कर्मसंज्ञा न । 'अभुक्त्यर्थस्य न' (वा) इति वार्तिकम् अत्र प्रमाणम् । अतो 'वने उपवसति' इति प्रयोगः । अरण्ये उपवासं करोति इत्यर्थः ।

## (आ) उपपदद्वितीया

१३. **मासं मङ्गलोत्सवः । सप्ताहम् अधीते । मासं गुडधानाः । योजनं कुटिला नदी । योजनं पठति । योजनं पर्वतः ।**

कालाध्वनोरत्यन्तसंयोगे – २.३.५ इह द्वितीया स्यात् ।

अध्वा = मार्गः । कालस्य अध्वनश्च गुणेन क्रियया द्रव्येण च निरन्तरसंयोगे गम्ये कालस्य अध्वनश्च द्वितीया भवति । एवञ्च गुणक्रियाद्रव्यैः कालस्य संयोगे त्रीणि उदाहरणानि, अध्वनः संयोगे त्रीणि उदाहरणानि सम्भवन्ति ।

कालात्यन्तसंयोगे उदाहरणानि –

i. **मासं मङ्गलोत्सवः ।**

माङ्गल्यं गुणः । माङ्गल्येन निरन्तरसंयोगः मासस्य । अतो मासात् द्वितीया प्रकृतसूत्रेण । मासे एकदिनम् अपि अनपहाय मङ्गलोत्सवः इत्यर्थः ।

ii. **सप्ताहम् अधीते ।**

अध्ययनं क्रिया । अध्ययनक्रियया निरन्तरसंयोगः सप्ताहस्य । अतः सप्ताहात् प्रकृतसूत्रेण द्वितीया । सप्ताहे एकमपि दिनम् अनपहाय पठति इत्यर्थः ।

iii. **मासं गुडधानाः ।**

गुडश्च धानाश्च = गुडधानाः । धानाः = भृष्टयवाः । गुडधानाः द्रव्यम् । द्रव्यभूतैः गुडधानैः निरन्तरसंयोगः मासस्य । अतो मासात् द्वितीया प्रकृतसूत्रेण । मासे एकमपि दिनम् अनपहाय गुडधानाः सन्ति इत्यर्थः ।

अध्वात्यन्तसंयोगे उदाहरणानि –

i. **योजनं कुटिला नदी ।**

कौटिल्यं नाम गुणः । तेन निरन्तरं संयोगः योजनस्य । (सूत्रे अध्वशब्देन अध्वपरिमाणं विवक्षितम्) अतो योजनात् द्वितीया प्रकृतसूत्रेण । दीर्घा च नदी योजनम् अभिव्याप्य अविच्छन्नतया वक्रा इत्यर्थः ।

ii. **योजनं पठति ।**

पठनं क्रिया । पठनक्रियया निरन्तरसंयोगः योजनम् । अतो योजनात् द्वितीया प्रकृतसूत्रेण । कश्चित् गच्छन् योजनम् अभिव्याप्य निरन्तरं पठति इत्यर्थः ।

iii. **योजनं पर्वतः ।**

पर्वतः द्रव्यम् । द्रव्यभूतेन पर्वतेन निरन्तरसंयोगः योजनस्य । अतो योजनात् द्वितीया प्रकृतसूत्रेण । योजनम् अभिव्याप्य अविच्छिन्नतया पर्वतो राजते इत्यर्थः ।

**१४. अन्तरा त्वां मां हरिः ।    अन्तरेण हरिं न सुखम् ।**

अन्तरान्तरेण युक्ते - २.३.४ आभ्यां योगे द्वितीया स्यात् । 'अन्तरा' इत्याकारान्तम् अव्ययम् । (अन्तरा = मध्ये) 'अन्तरेण' इत्यपि अव्ययम् । (अन्तरेण = वर्जयित्वा) अनयोः अव्यययोः योगे द्वितीया भवति इति सूत्रस्य फलितार्थः ।

i. **अन्तरा त्वां मां हरिः ।**

अन्तरा इत्यस्य योगः 'त्वाम्' इति 'माम्' इति च पदवाच्यस्य । अतः त्वां माम् इत्यत्र द्वितीया श्रूयते । सा च द्वितीया प्रकृतसूत्रेण । 'तव च मम च मध्ये हरिः' इत्यर्थः ।

ii. अन्तरेण हरिं न सुखम् ।

अन्तरेण इत्यस्य योगः हरेः । अतो हरिशब्दात् द्वितीया प्रकृतसूत्रेण । 'हरिं विना सुखं नास्ति' इत्यर्थः ।

१५. मार्गम् उभयतः वृक्षाः सन्ति । सर्वतः अध्यापकं शिष्याः सन्ति । धिक् अनृतवादिनम् । उपर्युपरि भूमिं विमानानि डयन्ते । अधोऽधो भूमिं जलं भवति ।

उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।
द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ।। (वा)

उभयतः, सर्वतः, धिक्, उपर्युपरि, अध्यधि, अधोऽधः इत्येतैः योगे द्वितीया स्यादिति वार्तिकस्य मथितोऽर्थः ।

i. मार्गम् उभयतः वृक्षाः ।

उभयतः इत्यनेन योगः [1]मार्गस्य । अतो मार्गात् द्वितीया प्रकृतवार्तिकेन । मार्गस्य पार्श्वद्वयेऽपि वृक्षाः इत्यर्थः ।

ii. सर्वतः अध्यापकं शिष्याः सन्ति ।

सर्वतः इत्यनेन योगः अध्यापकस्य । अतः अध्यापकात् द्वितीया प्रकृतवार्तिकेन । अध्यापकस्य सर्वेषु पार्श्वेषु शिष्याः स्थिताः इत्यर्थः ।

iii. धिक् अनृतवादिनम् ।

धिगित्यनेन योगः अनृतवादिनः । अतो अनृतवादिनो द्वितीया प्रकृतवार्तिकेन । अनृतवादी निन्द्यः इत्यर्थः ।

'धिङ्मूर्ख !' इत्यत्र तु 'निषिद्धाचरणम्' इति अध्याहार्यम् । तदा 'मूर्ख ! धिक् निषिद्धाचरणम्' इति वाक्यं सम्पद्यते । धिगित्यनेन योगः निषिद्धाचरणस्य, न तु मूर्खस्य । अतो निषिद्धाचरणात् द्वितीया । 'हे मूर्ख ! निषिद्धाचरणं निन्द्यम्' इत्यर्थः ।

iv. उपर्युपरि भूमिं विमानानि डयन्ते ।

उपर्युपरि इत्यनेन योगः भूमेः । अतो भूमेः द्वितीया प्रकृतवार्तिकेन । (उपर्युपरि = समीपोर्ध्वभागवृत्ति) भूमेः समीपे उपरि विमानानि डयन्ते इत्यर्थः ।

v. अधोऽधो भूमिं जलं भवति ।

अधोऽधो इत्यनेन योगः भूमेः । अतो भूमेः द्वितीया प्रकृतवार्तिकेन ।

1. सप्तदशे पृष्ठे स्थितां टिप्पणीं पश्यन्तु ।

(अधोऽध = समीपाधस्तनभागवृत्ति) भूमेः समीपे अधो जलं भवतीत्यर्थः ।

१६. **गृहम् अभितः तुणानि सन्ति । विद्यालयं परितः छात्राः क्रीडन्ति । बुभुक्षितं न प्रतिभाति किञ्चित् ।**

अभितः परितः समया निकषा हा प्रति योगेऽपि (वा) अभितः, परितः, समया, निकषा, हा, प्रति इत्येतैः योगे द्वितीया स्यादिति वार्तिकार्थः । 'ततोऽन्यत्रापि दृश्यते' इत्यस्यैव विवरणम् अनेन वार्तिकेन कृतम् ।

i. **गृहम् अभितः तुणानि सन्ति ।**

अभित इत्यनेन योगो गृहस्य । अतो गृहात् द्वितीया प्रकृतवार्तिकेन ।

ii. **विद्यालयं परितः छात्राः क्रीडन्ति ।**

परितः इत्यनेन योगो विद्यालयस्य । अतो विद्यालयात् द्वितीया । विद्यालयस्य सर्वेषु पार्श्वेषु छात्राः क्रीडन्ति इत्यर्थः ।

iii. **बुभुक्षितं न प्रतिभाति किञ्चित् ।**

प्रति इत्यनेन योगः बुभुक्षितस्य । अतो बुभुक्षितात् द्वितीया । बुभुक्षितस्य किञ्चिदपि न स्फुरति इत्यर्थः ।

iv. **ग्रामं समया । निकषा लङ्काम् । हा कृष्णभक्तम् ।**

इत्यपि अस्यैव वार्तिकस्य उदाहरणानि । ग्रामस्य समीपे, लङ्कायाः समीपे इति आद्ययोः द्वयोः वाक्ययोः अर्थः । कृष्णभक्तः शोच्यः इति तृतीयस्य वाक्यस्य एर्थः ।

## कर्मप्रवचनीयः (उपपदविशेषः)

कर्मप्रवचनीयो नाम काचन संज्ञा । अनु, उप, प्रति, परि, अभि, अधि, सु, अति, अपि, अप, आङ् इत्येतेषां प्रादीनां विशेषार्थे कर्मप्रवचनीयसंज्ञा विहिता ।

एतेषु (वर्जनार्थे) अप, परि, (प्रतिनिधिप्रतिदानार्थे) प्रति, (मर्यादाभिविध्यर्थे) आङ् इत्येतैः योगे पञ्चमी भवति । यथा – आ मुक्तेः संसारः ।

(ईश्वरार्थे) अधि (अधिकार्थे) 'उप' इत्येताभ्यां योगे सप्तमी भवति । यथा – अधि भुवि रामः ।

अनु, अभि, सु, अति, अपि (लक्षणाद्यर्थे) प्रति, परि (हीनार्थे) उप इत्येतैः योगे द्वितीया भवति ।

## (इ) कर्मप्रवचनीयद्वितीया (उपपदविशेषः)

१७. **वृक्षं प्रति विद्योतते विद्युत् ।**

लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः - १.४.९० एषु अर्थेषु विषयभूतेषु प्रत्यादयः उक्तसंज्ञाः स्युः । लक्षणं – ज्ञापकम् । इत्थंभूताख्यानम् – कञ्चित्प्रकारं प्राप्तस्य उपपादकम् । भागः – स्वीकार्योऽशः । वीप्सा – कात्स्न्येन सम्बन्धुम् इच्छा । एषु अर्थेषु प्रति, परि, अनु इत्येते त्रयः कर्मप्रवचनीयसंज्ञां प्राप्नुवन्ति इति सूत्रस्य फलितोऽर्थः ।

**वृक्षं प्रति विद्योतते विद्युत् ।**

'प्रति' इत्येषः लक्षणार्थद्योतकः । अतः कर्मप्रवचनीयसंज्ञा प्रकृतसूत्रेण । प्रति इत्यनेन योगः वृक्षस्य । अतो वृक्षशब्दात् द्वितीया 'कर्मप्रवचनीययुक्ते द्वितीया - २.३.८' इति सूत्रेण । 'वृक्षेण लक्ष्यमाणा विद्युत् विद्योतते' इत्यर्थः सम्पन्नो भवति वाक्यस्य । प्रकाशितेन वृक्षेण विद्युज्ज्ञानात् अत्र वृक्षः लक्षणम् इति ज्ञेयम् । तत् 'प्रति' इत्येषः द्योतयति ।

**इदं ज्ञेयम्** - कर्मप्रवचनीयसम्बद्धानि बहूनि उदाहरणानि सन्ति । तेषां प्रयोगाणां वैरल्यात् तानि अत्र न विवृतानि । सिद्धान्तकौमुदीतः तानि ज्ञातव्यानि ।

उपपदद्वितीयायामेव कर्मप्रवचनद्वितीयाऽपि अन्तर्भवति । कर्मप्रवचनीयसंज्ञायाः फलान्तरस्य सद्भावात् विशेषेण कर्मप्रवचनीयसंज्ञा पाणिनिना विहिता इति कृत्वा पार्थक्येन अत्र निरूपितम् ।

* * *

# ५. तृतीयाविभक्तिः

कारकतृतीया उपपदतृतीया इति तृतीया द्विविधा । कर्तृकारके करणकारके च तृतीयाविधानात् कर्तृतृतीया करणतृतीया चेति कारकतृतीया द्विविधा । एवञ्च कर्तृकारकतृतीया, करणकारकतृतीया, उपपदतृतीया चेति तृतीया अपि त्रिविधा भवति ।

यः कर्ता, यच्च करणं, तस्मात् कर्तृवाचकात् करणवाचकात् च तृतीया भवति । अनुक्ते कर्तरि करणे च तृतीयाविधायकं सूत्रम् एकम् एव – 'कर्तृकरणयोस्तृतीया – २.३.१८' (अनभिहिते कर्तरि करणे च तृतीया स्यात् ) इति । उपपदतृतीया-विधायकसूत्राणि बहूनि सन्ति ।

## (अ) कारकतृतीया

### I. कर्तरि

**१. अध्यापकेन विद्यालयः गम्यते ।**

स्वतन्त्रः कर्ता – १.४.५४ क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् । स्वातन्त्र्यं नाम क्रियाश्रयत्वम् । एवञ्च क्रियाश्रयः कर्ता इति फलितोऽर्थः । **अध्यापकेन विद्यालयः गम्यते** । अत्र गम्धातोरर्थः संयोगरूपं फलं, तदनुकूलक्रिया च । गमनक्रियाश्रयः अध्यापकः । अतः अध्यापकः कर्ता । गम्यते इत्यत्र 'ते' इति प्रत्ययस्य अर्थः कर्म, न तु कर्ता । अतः 'ते' इति प्रत्ययेन कर्ता न उक्तः (अनभिहितः इत्यर्थः) । तस्मात् कर्तृवाचकात् अध्यापकशब्दात् 'कर्तृकरणयोस्तृतीया – २.३.१८' इति सूत्रेण तृतीया भवति ।

**इदमवधेयम्** – कर्मणिप्रयोगेषु (कर्मवाच्येषु) भावेप्रयोगेषु (भाववाच्येषु ) च कर्तृपदं तृतीयान्तम् एव भवति ।

यथा – **सूदेन तण्डुलः पच्यते । पुष्पेण विकस्यते ।**

'पच्यते' इत्यत्र 'ते' इत्यस्य अर्थः कर्म, न तु कर्ता । 'विकस्यते' इत्यत्र 'ते' इत्यस्य अर्थः भावः, न तु कर्ता । एवञ्च उभयत्रापि कर्ता न उक्तः (अनभिहितः) । कर्तुः अनभिहितत्वात् उभयत्रापि 'कर्तृकरणयोः तृतीया' इति तृतीया एव भवति ।

## II. करणे

२. **रामः बाणेन रावणं हन्ति ।**

**साधकतमं करणम्** – १.४.४२ क्रियासिद्धौ प्रकृष्टोपकारकं कारकं करणसंज्ञं स्यात् ।

**रामः बाणेन रावणं हन्ति** । अत्र हन्‌धातोरर्थः – प्राणवियोगरूपं फलं, तदनुकूलव्यापारश्च । अत्र रामः कर्ता । प्राणवियोगरूपफलाश्रयत्वात् रावणः कर्म । प्राणवियोगरूपं फलं बाणप्रवेशसमनन्तरमेव भवतीति बाणः करणम् । तस्मात् करणवाचकात् 'कर्तृकरणयोः तृतीया' इति तृतीया भवति । (षष्ठं (६) पृष्ठमपि पश्यन्तु ।)

३. **अक्षैः दीव्यति । (अक्षान् दीव्यति)**

**दिवः कर्म च** – १.४.४३ दिवः साधकतमं कारकं कर्मसंज्ञं स्यात्, चात् करणसंज्ञम् ।

**अक्षैर्दीव्यति** । अक्षाणां करणसंज्ञायां 'कर्तृकरणयोस्तृतीया' इति तृतीया भवति । अक्षाणां कर्मसंज्ञायां तु 'कर्मणि द्वितीया' इति द्वितीया भवति ।

## (आ) उपपदतृतीया

४. **बालः मित्रेण सह आगच्छति ।**

**सहयुक्तेऽप्रधाने** – २. ३. १९ सहार्थेन युक्तेऽप्रधाने तृतीया स्यात् । सहार्थेन इति कथनात् साकं, सार्धं, समम् इति पर्यायाणां योगे अपि तृतीया स्यात् ।

**बालः मित्रेण सह आगच्छति** । अत्र सहेन युक्तं मित्रम् । ततः तृतीया भवति । अस्मिन् वाक्ये बालः अपि कर्ता, मित्रमपि । यतः आगमनक्रियायाः आश्रयौ उभौ अपि । किन्तु बालः प्रधानं, मित्रम् अप्रधानम् । मित्रस्य अप्राधान्यम् इत्थं निरूपणीयम् – कः आगच्छति ? बालः आगच्छति । केन सह आगच्छति ? मित्रेण सह आगच्छति । अत्र मित्रस्यापि आगमनम् अभवत् इति प्रतीयते, न तु शब्दमर्यादया उच्यते । एवञ्च बालस्य आगमनं शब्दमर्यादया (आगच्छति इति पदेन) उच्यते, मित्रस्य आगमनं ततः प्रतीयते । एतावन्मात्रेण मित्रस्य अप्राधान्यम् ।

**इदं ज्ञेयम्** – सहादिशब्देन विना तदर्थावगमेऽपि तृतीया स्यात् ।

**अध्यापकः शिष्येण आगच्छति** । अध्यापकः शिष्येण सह आगच्छति इत्यर्थः । 'वृद्धो यूना तल्लक्षणश्चेदेव विशेषः' इति सूत्रनिर्देशः अत्र प्रमाणम् । 'वृद्धो यूना सह' इति वक्तव्ये केवलं 'वृद्धो यूना' इति प्रयोगः पाणिनिना एव कृतः ।

५. **विद्यया ज्ञानं वर्धते । अध्ययनेन वसति ।**

**हेतौ - २.३.२३ हेत्वर्थे तृतीया स्यात् । हेतुर्नाम = कारणम् ।**

i. **विद्यया ज्ञानं वर्धते ।**

अत्र ज्ञानस्य हेतुः विद्या । अतः हेतुभूतायाः विद्यायाः तृतीया प्रकृतसूत्रेण ।

ii. **अध्ययनेन वसति ।**

अध्ययनं वाससाध्यम् । वासस्य अनन्तरं हि अध्ययनरूपं फलं सिध्यति । 'अन्यत्र कारणम् आदौ, कार्यम् अनन्तरम् इति क्रमः । अत्र कथं वासानन्तरं सम्पत्स्यमानम् अध्ययनं कारणं भवति' इति शङ्का उदेति । समाधानम् इत्थं वक्तव्यम् - प्रवृत्तिं प्रति इष्टसाधनताज्ञानं कारणम् । अध्ययनं करणीयम् इति ज्ञानं यदि न स्यात् वासमपि न कुर्यात् । अतः अध्ययनस्य स्वज्ञानद्वारा वासं प्रति कारणत्वम् । अतो हेतुभूतात् अध्ययनात् तृतीया अनेन सूत्रेण ।

६. **अक्ष्णा काणः । पादेन खञ्जः ।**

**येनाङ्गविकारः - २.३.२० येनाङ्गेन विकृतेन अङ्गिनो विकारो लक्ष्यते ततः तृतीया स्यात् । अङ्गिनो विकृतिः, विकृतेन अङ्गेन यदा लक्षिता भवति तदा विकृतात् अङ्गात् तृतीया भवति इत्यर्थः ।**

i. **अक्ष्णा काणः ।**

अत्र विकृतम् अङ्गम् अक्षि । तादृशेन अक्ष्णा अङ्गिनो देवदत्तस्य काणत्वं (आन्ध्यम्) लक्ष्यते । अतो विकृताङ्गात् अक्ष्णः तृतीया भवति प्रकृतसूत्रेण ।

ii. **पादेन खञ्जः ।**

अत्र विकृतम् अङ्गं पादः । तादृशेन पादेन अङ्गिनो यज्ञदत्तस्य खञ्जत्वं (कुण्ठितपादशक्तिः) लक्ष्यते । अतो विकृताङ्गात् पादात् तृतीया भवति प्रकृतसूत्रेण ।

७. **देवेन विना तृणमपि न चलति । [/ देवाद्विना तृणमपि न चलति । / देवं विना तृणमपि न चलति ।]**

**पृथग्विनानानाभिस्तृतीयान्यतरस्याम् - २. ३. ३२ एभिर्योगे तृतीया स्यात्, पञ्चमीद्वितीये च । पृथक्, विना, नाना, इत्येतैः योगे तृतीया भवति, पञ्चमी द्वितीया च ।**

अत्र 'विना' इत्यनेन योगो देवस्य । अतो देवात् तृतीया भवति प्रकृतसूत्रेण । तृतीयाभावपक्षे 'देवाद्विना तृणमपि न चलति' इति पञ्चमी, तस्याः अपि अभावपक्षे 'देवं विना तृणमपि न चलति' इति द्वितीया अपि भवति ।

८. **प्रकृत्या चारुः । प्रायेण याज्ञिकः । गोत्रेण गार्ग्यः । द्विद्रोणेन धान्यं क्रीणाति । सुखेन याति । दुःखेन याति । नाम्ना सुतीक्ष्णः । नाम्ना चन्द्रकला ।...**

प्रकृत्यादिभ्यः उपसंख्यानम् (वा) । प्रकृत्यादिः कश्चन गणः, यस्मिन् गणे प्रथमः शब्दः प्रकृतिशब्दः । प्रकृत्यादिशब्देभ्यः तृतीयाविभक्तिः भवति । एषा तृतीया सर्वविभक्त्यपवादः । प्रकृत्या चारुः = स्वभावेनैव अभिरूपः । प्रायेण याज्ञिकः = बह्वाचारज्ञाप्ययाज्ञिकत्ववान् । प्रायः = बहुः । गोत्रेण गार्ग्यः = गोत्रम् अस्य गार्ग्यः । सुखेन याति = सुखजनकं यानं करोति । दुःखेन याति = दुःखजनकं यानं करोति । नाम्ना सुतीक्ष्णः = नामज्ञाप्य-सुतीक्ष्णत्ववान् । नाम्ना चन्द्रकला = नामभूतचन्द्रकलाभिन्ना ।

९. **अलं विस्तरेण ।**

'गम्यमानापि क्रिया कारकविभक्तौ प्रयोजिका' यत्र क्रियाबोधकं पदं न श्रूयते, अपि तु योग्यतया अध्याह्रियते, तत्र अध्याहृतपदबोध्यक्रिया अपि कारकविभक्तेः प्रवृत्तौ निमित्तं भवतीत्यर्थः । 'अलं विस्तरेण' इत्यत्र बोध्यम् इति अध्याहरणीयम् । अलमिति निषेधात्मकम् अव्ययम् । विस्तरेण बोध्यं किमपि नास्तीत्यर्थः । अत्र बोधनक्रियां प्रति विस्तरः करणम् । अतः करणे तृतीया । (यद्यपि 'अलं श्रमेण, अलं गमनेन, अलं भोजनेन' इत्यादौ तृतीयायाः प्रवृत्तौ अलम् इति न निमित्तं, तथापि एतादृशेषु वाक्येषु निषेधार्थकस्य 'अलं'- शब्दस्य प्रयोगे तृतीया भवतीति स्मरणं सुकरम् ।)

१०. **अह्ना अनुवाकोऽधीतः । योजनेन श्लोकोऽधीतः ।**

अपवर्गे तृतीया - २.३.६ अपवर्गः फलप्राप्तिः । तस्यां द्योत्यायां कालाध्वनोः अत्यन्तसंयोगे तृतीया स्यात् ।

i. **अह्ना अनुवाकोऽधीतः** । अत्र अहन् इति शब्दः कालवाचकः । ततः तृतीया भवति ।

ii. **योजनेन श्लोकोऽधीतः** । अत्र योजनशब्दः अध्वपरिमाणवाची । ततः तृतीया भवति ।

**अयमत्र विशेषः** - अहनि निरन्तरम् अनुवाकः अधीतः कण्ठगतश्च अभवदिति प्रथमवाक्यस्य अर्थः । योजनं यावत् श्लोकोऽधीतः कण्ठगतश्च अभवदिति द्वितीयवाक्यास्य अर्थः । अत एव सूत्रे अपवर्गे(फलप्राप्तौ) इत्युक्तम् । प्रत्युदाहरणं - मासमधीतः, न आयातः इति ।

# ६. चतुर्थीविभक्तिः

कारकचतुर्थी उपपदचतुर्थी चेति चतुर्थी द्विविधा । यत् सम्प्रदानं भवति, तस्मात् सम्प्रदानात् चतुर्थी भवति । अनुक्ते सम्प्रदाने चतुर्थीविधायकं सूत्रम् एकम् एव 'चतुर्थी सम्प्रदाने' - २.३.१३ इति । सम्प्रदानसंज्ञाविधायकानि सूत्राणि तु बहूनि सन्ति । उपपदचतुर्थीविधायकसूत्राणि अपि अनेकानि सन्ति ।

## (अ) कारकचतुर्थी

१. **पिता पुत्राय फलं ददाति ।**

कर्मणा यमभिप्रैति स सम्प्रदानम् - १.४.३२ दानस्य कर्मणा यम् अभिप्रैति स सम्प्रदानसंज्ञः स्यात् ।

**पिता पुत्राय फलं ददाति ।** अत्र पिता कर्ता । फलं कर्म । कर्मणा सम्बन्धुं पुत्रम् अभिप्रैति । अतः पुत्रः सम्प्रदानम् । तस्मात् सम्प्रदानवाचकात् शब्दात् 'चतुर्थी सम्प्रदाने' इति सूत्रेण चतुर्थी भवति । (षष्ठं (६) पृष्ठं पश्यन्तु ।)

२. **राजा युद्धाय संनह्यते ।**

'क्रियया यमभिप्रैति स सम्प्रदानम्' (वा) अकर्मकक्रियोद्देश्यमपि सम्प्रदानसंज्ञं स्यादिति वार्तिकस्य अर्थः ।

**राजा युद्धाय संनह्यते ।** अत्र सन्नहनमेव क्रिया । तस्याः क्रियायाः उद्देश्यं युद्धम् । अतो युद्धं सम्प्रदानं प्रकृतवार्तिकेन । तस्मात् सम्प्रदानभूतात् युद्धात् 'चतुर्थी सम्प्रदाने' इति सूत्रेण चतुर्थी भवति ।

३. **बालकाय खण्डशर्करा रोचते ।**

रुच्यर्थानां प्रीयमाणः - १.४.३३ रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणोऽर्थः सम्प्रदानं स्यात् । प्रीयमाणः = प्रीत्याश्रयः ।

**बालकाय खण्डशर्करा रोचते ।** अत्र खण्डशर्करया प्रीतिः बालके समुत्पन्ना । अतः प्रीत्याश्रयः बालः । स बालः सम्प्रदानसंज्ञां प्राप्नोति । रोचतेश्च प्रयोगः कृतः । अतः बालात् चतुर्थी - 'चतुर्थी सम्प्रदाने' इति सूत्रेण ।

**इदं विज्ञेयम्** - अभिलषतेः रोचतेश्च अर्थभेदोऽस्ति ।

i. प्रीत्याश्रयकर्तृकः किञ्चिद्विषयकः इच्छाविशेषः **अभिलाषः** । यथा - बालकः खण्डशर्कराम् अभिलषति । खण्डशर्करया समुत्पाद्यमाना प्रीतिः

बालेऽस्ति । अतः प्रीत्याश्रयः बालकः । स एव अस्मिन् वाक्ये कर्ता । अतः तस्य सम्प्रदानसंज्ञा न भवति । चतुर्थी अपि न भवति ।

ii. प्रीत्यश्रयापेक्षया यदन्यत्, तत्कर्तृकाभिलाषः **रुचिः** । यथा - बालकाय खण्डशर्करा रोचते । अत्र प्रीत्याश्रयः बालः । तदपेक्षया अन्यत् खण्डशर्करा । खण्डशर्करा एव अस्मिन् वाक्ये कर्त्री, न तु बालः । अतः अत्र प्रीत्याश्रयस्य सम्प्रदानसंज्ञा । ततः चतुर्थी । एवञ्च अभिलषतेः प्रयोगे प्रीत्याश्रयः एव कर्ता भवति, रोचतेः प्रयोगे प्रीत्याश्रयः कर्ता न भवति, किन्तु अन्यः एव कर्ता भवति ।

**४. बालिका पुष्पेभ्यः स्पृहयति ।**

स्पृहेरीप्सितः - १.४.३६ स्पृहयतेः प्रयोगे इष्टः सम्प्रदानं स्यात् ।
**बालिका पुष्पेभ्यः स्पृहयति** । अत्र स्पृहयतेः प्रयोगः अस्ति । पुष्पाणि च इष्टानि । अतः पुष्पाणां सम्प्रदानसंज्ञा । ततश्चतुर्थी भवति - 'चतुर्थी सम्प्रदाने' इति सूत्रेण । **इदं विज्ञेयम्** - केवलम् इष्टत्वे सम्प्रदानसंज्ञा । तदा 'पुष्पेभ्यः स्पृहयति' इति प्रयोगः । इष्टतमत्वे तु सम्प्रदानसंज्ञा न भवति, किन्तु कर्मसंज्ञैव । तदा 'पुष्पाणि स्पृहयति' इत्यपि प्रयोगः सम्भवति ।

**५. कंसः कृष्णाय क्रुध्यति । द्रोणादयः अभिमन्यवे द्रुह्यन्ति । कर्णः अर्जुनाय ईर्ष्यति । मन्दमतिः बुद्धिमते असूयति ।**

क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः - १.४.३७ क्रुधाद्यर्थानां प्रयोगे यं प्रति कोपः सः सम्प्रदानसंज्ञः स्यात् । क्रुध्यति, द्रुह्यति, ईर्ष्यति, असूयति इत्येतेषां, तत्पर्यायाणाञ्च प्रयोगे यं प्रति कोपः सः सम्प्रदानसंज्ञां प्राप्नोति इत्यर्थः । क्रोधः = अमर्षः । द्रोहः = अपकारः । ईर्ष्या = अक्षमा (असहनम्) असूया = गुणेषु दोषाविष्करणम् ।

**i. कंसः कृष्णाय क्रुध्यति ।**

अत्र कृष्णं प्रति कंसस्य कोपः अस्ति । अतः कृष्णः सम्प्रदानम् । ततश्चतुर्थी ।

**ii. द्रोणादयः अभिमन्यवे द्रुह्यन्ति ।**

अत्र अभिमन्युं प्रति द्रोणादीनां कोपोऽस्ति । अतोऽभिमन्युः सम्प्रदानम् । ततश्चतुर्थी ।

**iii. कर्णः अर्जुनाय ईर्ष्यति ।**

अत्र अर्जुनं प्रति कर्णस्य कोपः अस्ति । अतोऽर्जुनः सम्प्रदानम् ।

ततश्चतुर्थी ।

iv. **मन्दमतिः बुद्धिमते असूयति ।**

अत्र बुद्धिमन्तं प्रति मन्दमतेः कोपः अस्ति । अतो बुद्धिमान् सम्प्रदानम् । ततश्चतुर्थी ।

६. **बालः ग्रामाय (ग्रामं) गच्छति ।**

**गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि – २.३.१२** अध्वभिन्ने गत्यर्थानां कर्मणि एते स्तश्चेष्टायाम् । गत्यर्थकधातूनां प्रयोगे कर्मणि चतुर्थी भवति द्वितीयापि, शरीरस्पन्दरूपगमनक्रियायां गम्यमानायाम् । किन्तु गन्त्राधिष्ठितः मार्गः यदि कर्म भवति तदा चतुर्थी न भवति इति तात्पर्यम् ।

अत्र ग्रामः कर्म । ततश्चतुर्थी भवति । द्वितीयायाः अपि अनेनैव विधानात् प्रवर्तते । तदा वाक्यं 'ग्रामं गच्छति' इत्यपि भवति ।

**इदं विज्ञेयम् –**

i. **'भक्तः मनसा हरिं व्रजति'** इत्यत्र चतुर्थी न भवति ।

भक्तः हरिं मनसा प्राप्नोति – इति वाक्यस्यास्य अर्थः । अत्र यद्यपि गमनार्थः अस्ति, तथापि एतद्गमनं पादादिस्पन्दरूपं न । 'ग्रामाय गच्छति' इत्यादौ तु पादादिस्पन्दनरूपं गमनमस्ति । स्पन्दनरूपगमने एव चतुर्थी । अतः एव सूत्रे चेष्टायाम् इत्युक्तम् । चेष्टा = शरीरपरिस्पन्दः ।

ii. **शिशुः पन्थानं गच्छति** – इत्यत्रापि चतुर्थी न भवति । अत्र पन्थाः (मार्गः) कर्म । अतः पथः तत्पर्यायाद् वा चतुर्थी न भवति । अतः एव सूत्रे 'अनध्वनि' इत्युक्तम् ।

७. **न त्वां तृणाय (तृणं) मन्ये ।**

**मन्यकर्मण्यनादरे विभाषा अप्राणिषु – २.३.१७** प्राणिवर्जे मन्यतेः कर्मणि चतुर्थी वा स्यात् तिरस्कारे । 'अप्राणिष्वित्यपनीय नौकाकान्नशुकशृगालवर्जेष्विति वाच्यम्' (वा) मन्यतेः कर्मणि विकल्पेन चतुर्थी भवति, तच्च कर्म अनादरद्योतकं भवेत्, तत्कर्म नौः, काकः, अन्नं, शुकः, शृगालो वा न भवेदिति सूत्रवार्तिकयोः तात्पर्यार्थः ।

**न त्वां तृणाय मन्ये ।** अत्र युष्मच्छब्दार्थः, तृणश्च मन्यतेः कर्म । अनादरद्योतकं कर्म तृणमेव । अतः तृणादेव चतुर्थी, न तु युष्मच्छब्दात् । तृणसदृशोऽपि न, तृणादप्यधमः इत्यर्थः । एवं 'न त्वां शुनं मन्ये' इत्यादिः । शुनकसदृशोऽपि न, शुनकादप्यधमः इत्यर्थः ।

## (आ) उपपदचतुर्थी

**८. अवहननाय उलूखलम् ।**

'तादर्थ्ये चतुर्थी वाच्या' (वा) तादर्थ्ये उपकार्योपकारकभावसम्बन्धे विवक्षिते उपकार्यात् चतुर्थी भवति ।

**अवहननाय उलूखलम् ।** अत्र उलूखलम् उपकारकम्, अवहननम् उपकार्यम् । उपकार्यात् चतुर्थी । एवं कुण्डलाय हिरण्यम्, यूपाय दारु, रन्धनाय स्थाली इत्यादावपि हिरण्यं, दारु, स्थाली च उपकारकम् । कुण्डलं, यूपः, रन्धनञ्च उपकार्यम् । उपकार्यात् चतुर्थी इति ज्ञेयम् ।

**९. श्री गणेशाय नमः । सर्वेभ्यः स्वस्ति । अग्नये स्वाहा । पितृभ्यः स्वधा । भीमो बकाय अलम् । वषड् इन्द्राय ।**

नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च - २.३.१६ एभिर्योगे चतुर्थी स्यात् । श्रीगणेशाय नमः = श्रीगणेशोद्देश्यकं नमनम् इत्यर्थः । सर्वेभ्यः स्वस्ति = सर्वसम्बन्धि कुशलम् इत्यर्थः । पितृभ्यः स्वाहा = पित्र्युद्देश्यकं द्रव्यदानम् इत्यर्थः । भीमो बकाय अलम् = भीमः बकमारणसम्बन्धिसामर्थ्यवान् इत्यर्थः । वषडिन्द्राय = इन्द्रोद्देश्यकं हविर्दानम् इत्यर्थः ।

**इदं विज्ञेयम्** - 'अलमिति पर्याप्त्यर्थग्रहणम्' इति वार्तिकम् । अलमित्यनेन पर्याप्त्यर्थकशब्दानां ग्रहणं कर्तव्यम् । तेन अलं, प्रभुः, समर्थः, शक्तः इत्यादीनां योगेऽपि चतुर्थी भवति इति वार्तिकस्य आशयः । तेन, 'दैत्येभ्यो हरिः प्रभुः ।' 'रामो रावणाय समर्थः ।' 'लक्ष्मणः इन्द्रजिते शक्तः' इत्यादि सिद्धम् । अलमिति शब्दं विहाय प्रभ्वादियोगे षष्ठी अपि साधुः । 'दैत्यानां हरिः प्रभुः' इत्यादिः ।

**१०. भक्तिः ज्ञानाय कल्पते ।**

'क्लृपि सम्पद्यमाने च' (वा) क्लृपिधातौ तत्पर्याये वा प्रयुज्यमाने सति सम्पद्यमानेऽर्थे वर्तमानात् चतुर्थी स्यात् । सम्पद्यमानं नाम विकारात्मना उत्पद्यमानम् ।

**भक्तिः ज्ञानाय कल्पते ।** अत्र भक्तिं संमर्द्य परिणामरूपेण उत्पद्यमानं ज्ञानं, क्लृप्धातुश्च प्रयुक्तः । अतः ज्ञानशब्दात् चतुर्थी । एवं 'तण्डुलः ओदनाय सम्पद्यते' इत्यादयः ।

**११. बालाय हितं क्षीरम् ।**

हितयोगे च (वा) हितशब्दप्रयोगे चतुर्थी भवति । अत्र हितशब्दस्य प्रयोगः कृतः इति बालशब्दात् चतुर्थी । बालस्य सुखकृत् क्षीरम् इत्यर्थः ।

□□□□□

# ७. पञ्चमीविभक्तिः

कारकपञ्चमी 'उपपदपञ्चमी' चेति पञ्चमी द्विविधा । यत् अपादानं भवति, तस्मात् अपादानात् पञ्चमी भवति । अपादाने पञ्चमीविधायकं सूत्रम् एकम् एव अपादाने पञ्चमी - २.३.१८ इति । अपादानसंज्ञाविधायकसूत्राणि बहूनि सन्ति । उपपदपञ्चमीविधायकानि सूत्राण्यपि सन्ति अनेकानि । कर्मप्रवचनीयसंज्ञां पुरस्कृत्य पञ्चमीविधायके द्वे सूत्रे स्तः ।

## (अ) कारकपञ्चमी

**१. वृक्षात् पर्णं पतति ।**

ध्रुवमपायेऽपादानम् - १.४.२४ विश्लेषे साध्ये अवधिभूतं कारकम् अपादानं स्यात् । विभागाश्रयोऽपादानमिति फलितार्थः ।

**वृक्षात् पर्णं पतति** । अत्र पतधातोरर्थः अधोदेशसंयोगरूपं फलं, तदनुकूलक्रिया च । पतनक्रियाश्रयः पर्णं कर्तृ । विभागाश्रयः वृक्षः । अतो वृक्षोऽपादानम् । अपादानभूतात् वृक्षात् पञ्चमी 'अपादाने पञ्चमी' इति सूत्रेण । (सप्तमं (७) पृष्ठं पश्यन्तु ।)

**२. पापात् जुगुप्सते । अधर्मात्विरमति । धर्मात् प्रमाद्यति ।**

जुगुप्साविरामप्रमादार्थानामुपसंख्यानम् (वा) जुगुप्सा-विराम-प्रमादार्थकधातुभिः योगे जुगुप्साविषयस्य, विरामविषयस्य, प्रमादविषयस्य च अपादानसंज्ञा भवति ।

i. **पापात् जुगुप्सते** । अत्र जुगुप्सायाः विषयः पापम् । तस्य अपादानसंज्ञा प्रकृतवार्तिकेन । अपादानभूतात् पापात् पञ्चमी 'अपादाने पञ्चमी' इति सूत्रेण । पापात् जुगुप्सते = पापविषये न रमते ।

ii. **अधर्मात् विरमति** । अत्र विरामस्य विषयोऽधर्मः । तस्य अपादानसंज्ञा भवति । अपादानभूतात् अधर्मात् पञ्चमी 'अपादाने पञ्चमी' इति सूत्रेण । अधर्माद्विरमति = अधर्मविषये न प्रवर्तते इत्यर्थः ।

iii. **धर्मात् प्रमाद्यति** । अत्र प्रमादस्य विषयः धर्मः । तस्य अपादानसंज्ञा । अपादानभूतात् धर्मात्पञ्चमी 'अपादाने पञ्चमी' इति सूत्रेण । धर्मात्प्रमाद्यति = धर्मविषये मुह्यति इत्यर्थः ।

३. चोरात् बिभेति । व्याघ्रात् रक्षति ।

भीत्रार्थानां भयहेतुः - १.४.२५ भयार्थानां त्राणार्थानां च प्रयोगे भयहेतुः अपादानं स्यात् ।

i. चोरात् बिभेति । अत्र भयहेतुः चोरः । अतः चोरः अपादानम् । चोरात् पञ्चमी ।

ii. व्याघ्रात् रक्षति । अत्र भयहेतुः व्याघ्रः । अतः व्याघ्रः अपादानम् । व्याघ्रात् पञ्चमी । चोराद्बिभेति = चोरेण हेतुना भीतिम् आप्नोति इत्यर्थः । व्याघ्रात् त्रायते = व्याघ्रेण हेतुना तत्कृतवधनिवृत्त्यै आत्मानं रक्षति इत्यर्थः ।

४. शिष्यः उपाध्यायात् अधीते ।

आख्यातोपयोगे - १.४.२९ नियमपूर्वकविद्यास्वीकारे वक्ता अपादानं स्यात् । वक्ता = अध्यापयिता ।

शिष्यः उपाध्यायात् अधीते । नियमपूर्वकविद्यायाः स्वीकर्ता शिष्यः । अतः शिष्यः कर्ता । तस्य अध्यापयिता उपाध्यायः । अतः उपाध्यायः अपादानम् । उपाध्यायात् पञ्चमी । शिष्यः उपाध्यायादधीते = नियमविशेषपूर्वकम् उपाध्यायस्योच्चारणम् अनूच्चारयति इत्यर्थः ।

५. तन्तुभ्यः पटो भवति ।

जनिकर्तुः प्रकृतिः - १.४.३० जायमानस्य हेतुः अपादानं स्यात् ।

तन्तुभ्यः पटो भवति । अत्र जायमानः पटः । तस्य हेतुः तन्तवः । अतः तन्तवः अपादानम् । ततो पञ्चमी । तन्तुभ्यः पटो भवति = तन्तुभ्यः पटो जायते इत्यर्थः ।

## (आ) उपपदपञ्चमी

६. प्राध्यापकात् प्राचार्यः अन्यः । न्यायाधीशात् न्यायवादी भिन्नः । अर्जुनात् कार्तवीर्यार्जुनः इतरः । सर्वेभ्यो विलक्षणः एषः । ननु सप्तभ्यः पदार्थेभ्यः तमः अर्थान्तरम् । ग्रामात् आराद् वनम् अस्ति । संस्कृतात् ऋते संस्कृतिः दुर्ज्ञेया । ग्रामात् उत्तरो विद्यालयः । वैशाखात् पूर्वः चैत्रः ।

अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते - २.३.२९ अन्य, आरात्, इतर, ऋते, दिक्शब्द, अञ्चूत्तरपद, आच्, आहि इत्येतैर्योगे पञ्चमीविभक्तिः भवति । अत्र अन्येत्यर्थग्रहणं कर्तव्यम् । तेन तत्पर्यायाणामपि प्रयोगे पञ्चमी भवति । सूत्रे तदा इतरग्रहणं स्पष्टार्थम् इति ज्ञेयम् ।

i. 'प्राध्यापकात्....', '....अर्थान्तरम्' इति पञ्चसु वाक्येषु अन्यार्थक-शब्दयोगात् पञ्चमी श्रूयते ।

ii. **ग्रामात् आरात् वनम् अस्ति** = ग्रामाद् दूरं समीपं वा वनमस्ति इत्यर्थः । आराद् = दूरं समीपं वा ।

iii. **संस्कृतात् ऋते संस्कृतिः दुर्ज्ञेया** = संस्कृतं विना संस्कृतिः दुर्ज्ञेया इत्यर्थः । ऋते = विना ।

iv. **ग्रामात् उत्तरः विद्यालयः** = ग्रामावधिकः उत्तरदिग्वर्ती विद्यालयः इत्यर्थः । दिक्शब्दाः नाम = रूढ्या दिग्विशेषवाचकाः पूर्वादयः, कालवाचकाः पूर्वादयः च ।

v. **वैशाखात् पूर्वः चैत्रः** = वैशाखावधिकः पूर्वकालभवः चैत्रः । अवयववाचिनां पूर्वादीनां योगे पञ्चमी न भवति । यथा – पूर्वं कायस्य / शरीरस्य पूर्वावयवः इत्यर्थः । अत्र पूर्वशब्दः अवयववाची । अतो न पञ्चमी । (अञ्चूत्तरपदः – ग्रामात् प्राक् । आच्प्रत्ययान्तः = ग्रामात् दक्षिणा । आहिप्रत्ययान्तः – नगरात् दक्षिणाहि ।)

**७. बाल्यात् प्रभृति पञ्चवादने उत्तिष्ठति । मासात् आरभ्य मेघो वर्षति ।**

'कार्तिक्याः प्रभृति' इति भाष्यप्रयोगात् प्रभृत्यर्थयोगे पञ्चमी भवति । प्रभृत्यर्थयोगे इति कथनात् 'आरभ्य' इत्यस्य योगेऽपि पञ्चमी भवति । **बाल्यात्प्रभृति पञ्चवादने उत्तिष्ठति** = बाल्यम् अवधिम् आदाय पञ्चवादने उत्तिष्ठति इत्यर्थः । **मासादारभ्य मेघो वर्षति** = मासम् अवधिम् आदाय मेघो वर्षति इत्यर्थः ।

'आरभ्य' इत्यस्य योगे द्वितीयापि भवति । 'अवीचीमारभ्य' इति भाष्यप्रयोगात् । तेन 'सूर्योदयमारभ्य आस्तमयाज्जपति' इति सिद्धम् । प्रारम्भं कृत्वा इत्यर्थे 'आरभ्य' इत्यस्य योगे सप्तमी अपि । यथा – 'आरभ्य तस्यां दशमीन्तु यावत्' इति । तस्यां प्रारम्भं कृत्वा दशमीपर्यन्तं यावत् इत्यर्थः ।

**८. गृहाद् बहिः कुतः तिष्ठसि ?**

अपपरिबहिरञ्चवः पञ्चम्याः – २.१.१२ अप, परि, बहिस्, अञ्चु इत्येते पञ्चम्यन्तेन वा समस्यन्ते । यथा – वनाद् बहिः = बहिर्वनम् । अनेन सूत्रेण पञ्चम्यन्तेन सह 'बहिः' इति शब्दस्य समासविधानात् ज्ञायते यत् बहिर्योगे पञ्चमी भवति इति । बहिर्योगे पञ्चम्याः विधायकस्य सूत्रस्य अभावेन पूर्वोक्तात् ज्ञापकात् बहिर्योगे पञ्चमी भवति । क्वचित् षष्ठी अपि श्रूयते इति व्याख्यानादिषु

लिख्यते । यथा – 'करस्य करभो बहिः' इति । 'ज्ञापकसिद्धं न सर्वत्र' इति परिभाषाम् अवलम्ब्य षष्ठी साधनीया इति तेषाम् आशयः ।

**९. शनैः शनैः गच्छति आलस्यात्/आलस्येन वा ।**

विभाषा गुणेऽस्त्रियाम् – २.३.२५ गुणे हेतौ पञ्चमी वा स्यात् । स्त्रीलिङ्गे तु पञ्चमी न भवति । अत्र आलस्यमिति गुणवाचकः शब्दः । शनैः गमने आलस्यं हेतुः । अतः आलस्यात् पञ्चमी भवति । पञ्चम्याः विकल्पेन विधानात् पञ्चम्याः अभावे 'हेतौ – २.३.२३' इति सूत्रेण तृतीया भवति । अतः हेतुतृतीयायाः विकल्पेन गुणं प्रति अपवादभूता पञ्चमी इति ज्ञेयम् । 'दण्डाद् घटः' इति प्रयोगः चिन्त्यः एव । यद्यपि घटस्य दण्डः हेतुः, तथापि गुणवाचकादेव पञ्चमी भवति इत्युक्तत्वात्पञ्चमी न । दण्डस्तु न गुणः । अतः दण्डेन घटः इत्येव प्रयोगः । 'प्रज्ञायाः मुक्तिः' इत्यपि न भवति । यद्यपि प्रज्ञा गुणः, मुक्ते हेतुश्च तथापि 'स्त्रीलिङ्गे न भवति' इति निषेधात् पञ्चमी न भवति । प्रज्ञायाः स्त्रीत्वात् ।

**पर्वतः वह्निमान् धूमात् । नास्ति घटोऽनुपलब्धेः ।**

अत्र वह्निज्ञानस्य धूमः हेतुः । अतः धूमात् पञ्चमी । घटाभावस्य अनुपलब्धिः हेतुः । अतः अनुपलब्धेः पञ्चमी । ननु धूमः न गुणः, अनुपलब्धिः यद्यपि गुणः तथापि स्त्रीलिङ्गे वर्तते । अतो 'विभाषा गुणेऽस्त्रियाम्' इति सूत्रेण धूमात् अनुपलब्धेः इत्यनयोः कथं पञ्चमी ? अगुणवाचकात् स्त्रीलिङ्गाच्च पञ्चम्याः निषेधात् ? इति चेत् । अत्र इदं समाधानम् – 'अकर्तर्यृणे पञ्चम्याः – २.३.२४', 'विभाषा गुणेऽस्त्रियाम् – २.३.२५' इति सूत्रक्रमः अष्टाध्याय्याम् । तत्र 'विभाषा गुणेऽस्त्रियाम्' इति सूत्रं द्विधा विभज्यते । 'विभाषा' इति एकं सूत्रम्, 'गुणेऽस्त्रियाम्' इति द्वितीयं सूत्रम् । 'विभाषा' इत्यत्र 'अकर्तृयृणे पञ्चमी' इति सूत्रात् 'पञ्चमी' इत्यनुवर्तते । 'विभाषा पञ्चमी भवति' इति 'विभाषा' इति सूत्रस्य अर्थः । ('गुणेऽस्त्रियाम्' इति द्वितीयसूत्रे 'विभाषा' इति 'पञ्चमी' इति च अनुवर्तते । पूर्वोक्तः अर्थः ।) पूर्वोक्तं वाक्यद्वयम् अस्य सूत्रस्य उदाहरणम् । इत्थं सूत्रं विभज्य व्याख्यानात् शिष्टानां प्रयोगे सति क्वचित् अगुणादपि स्त्रीलिङ्गादपि पञ्चमी विकल्पेन भवतीति ज्ञेयम् ।

**१०. कृष्णाद् विना नान्या गतिः । (कृष्णं / कृष्णेन विना नान्या गतिः)**

पृथग्विनानानाभिस्तृतीयान्यतरस्याम् – २.३.३२ पृथग्, विना, नाना इत्येतैः योगे तृतीया स्यात् पञ्चमीद्वितीये च ।

कृष्णाद्विना नान्या गतिः । अत्र 'विना' इति कृष्णेन अन्वितः । अतः कृष्णात् पञ्चमी । पञ्चम्याः अभावे अनेनैव सूत्रेण द्वितीया तृतीया च भवतः । कृष्णाद्विना नान्या गतिः = कृष्णं वर्जयित्वा अन्या गतिः नास्ति इत्यर्थः । (कृष्णात्पृथक् नान्या गतिः । कृष्णात् नाना नान्या गतिः)

११. **ग्रामात् दूरं नगरम् । गृहात् अन्तिकं गोष्ठम् ।**
**(ग्रामस्य दूरं नगरम् ।) (गृहस्य अन्तिकं गोष्ठम् ।)**

दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् - २.३.३४ एतैः योगे षष्ठी स्यात् पञ्चमी च । दूरान्तिकार्थैः इति कथनात् दूरार्थकानाम् अन्तिकार्थकानां पर्यायाणामपि ग्रहणम् । अतो दूरान्तिकार्थैः शब्दैः सह योगे षष्ठी भवति पञ्चमी च ।

i. **ग्रामात् दूरं नगरम् ।**

अत्र दूरेण योगो ग्रामस्य । अतो ग्रामात् पञ्चमी प्रकृतसूत्रेण ।

ii. **गृहात् अन्तिकं गोष्ठम् ।**

अत्र अन्तिकेन योगो गृहस्य । अतो गृहात् पञ्चमी प्रकृतसूत्रेण ।

पर्यायाणामपि ग्रहणात् 'ग्रामात् विप्रकृष्टं नगरम्' 'गृहात् निकटं गोष्ठम्' इत्यत्रापि पञ्चमी भवति । पञ्चम्याः अभावे अनेनैव सूत्रेण षष्ठी भवति । यथा - ग्रामस्य दूरं नगरम् । गृहस्य अन्तिकं गोष्ठम् ।

१२. **ग्रामस्य दूराद् / विप्रकृष्टाद् वनमस्ति ।**
**वृक्षस्य अन्तिकाद् / निकटाद् गौः अस्ति ।**

दूरान्तिकार्थेभ्यो द्वितीया - २.३.३५ दूरान्तिकार्थेभ्यः शब्देभ्यः द्वितीया स्यात् पञ्चमी तृतीयापि । दूरान्तिकार्थेभ्यः इति कथनात् दूरार्थकानाम् अन्तिकार्थकानां पर्यायाणामपि ग्रहणम् ।

**अयमत्र विशेषः** - पूर्वसूत्रेण - (दूरान्तिकार्थैः... - २.३.३४) दूरान्तिकार्थैः योगे तदर्थान्विताद् पञ्चमी, षष्ठी च विभक्तिः विहिता । अनेन सूत्रेण तु दूरान्तिकार्थेभ्यः शब्देभ्यः एव विभक्तयः विहिताः । विभक्तीनामर्थोऽपि प्रातिपदिकार्थः एव । सप्तम्यधिकरणे च - २.३.३६ इति सूत्रेणापि दूरान्तिकार्थेभ्यः सप्तमी विहिता । प्रकृतसूत्रेण तु द्वितीया, पञ्चमी, तृतीया चेति तिस्रो विभक्तयः विहिताः ।

एवञ्च चतस्रः विभक्तयः भवन्ति । यथा -

**१. ग्रामस्य दूरं वनम् अस्ति । २. ग्रामस्य दूरेण वनम् अस्ति ।**
**३. ग्रामस्य दूरात् वनम् अस्ति । ४. ग्रामस्य दूरे वनम् अस्ति ।**

१. वृक्षस्य अन्तिकं गौः अस्ति । २. वृक्षस्य अन्तिकेन गौः अस्ति ।
३. वृक्षस्य अन्तिकात् गौः अस्ति । ४. वृक्षस्य अन्तिके गौः अस्ति ।

अत्र पूर्वोक्तेषु आद्येषु चतुर्षु वाक्येषु 'ग्रामस्य' इति, अवशिष्टेषु चतुर्षु वाक्येषु 'वृक्षस्य' इति च श्रूयते । तत्र 'ग्रामात्' इति 'वृक्षात्' इत्यपि प्रयोक्तुं शक्यते दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् - २.३.३४ इति सूत्रबलात् । एवञ्च पुनः अष्टौ वाक्यानि सम्भवन्ति इति फलितम् ।

**इदमत्र विज्ञेयम् -**

दूरः पन्थाः, निकटो ग्रामः इत्यादौ दूरशब्दः निकटशब्दश्च सत्त्ववाचिनौ अर्थात् द्रव्यवाचिनौ । असत्त्ववचने एव पूर्वोक्ताः चतस्रः विभक्तयः । सत्त्ववचने तु विशेष्यानुसारेण विभक्तयः भवन्ति । यथा दूरः पन्थाः । दूराय पथे । दूरस्य पथः... इत्यादि । सत्त्वं नाम लिङ्गसंख्यान्वयि ।

## (इ) कर्मप्रवचनीयपञ्चमी (उपपदविशेषः)*

१३. **आ हिमालयात् चीनादेशः । (आ – तेन विना) आ हिमालयात् भारतदेशः । (आ – तेन सह)** पञ्चम्यपाङ्परिभिः - २.३.१० अप आङ् परि इत्येतैः कर्मप्रवचनीयैः योगे पञ्चमी स्यात् । मर्यादा अभिविधिश्चेति द्वौ अर्थौ आङः । तादृशार्थकेन आङः योगे पञ्चमी भवति । मर्यादा नाम – तेन विना । अभिविधिर्नाम – तेन सह ।

आ हिमालयात् चीनादेशः – हिमालयं वर्जयित्वा ततश्चीनादेशः ।
आ हिमालयात् भारतदेशः – हिमालयम् अभिव्याप्य भारतदेशः ।

(**अप** – अप हरेः संसारः । **परि** – परि हरेः संसारः । हरिं वर्जयित्वा संसारः इत्यर्थः ।)

* * *

---

* (३१ पृष्ठे 'इदं ज्ञेयम्' इत्येतं भागं पश्यन्तु ।)

# ८. षष्ठीविभक्तिः

षष्ठी द्विधा – शेषषष्ठी कारकषष्ठी च इति । शेषषष्ठी एव सम्बन्धसामान्ये षष्ठी इति उच्यते । केषाञ्चन कृदन्तानां योगे कर्तरि कर्मणि च षष्ठी विहिता । सा कारकषष्ठी इति उच्यते । षष्ठ्याः कारकत्वं नास्ति इत्यस्य शेषषष्ठ्याः कारकत्वं नास्ति इति आशयः । अतः षष्ठ्याः कारकत्वं नास्ति इति प्रायोवादमात्रम् ।

## (अ) शेषषष्ठी

**१. राज्ञः पुरुषः । दशरथस्य पुत्रः । वृक्षस्य पर्णम् ।**

**षष्ठी शेषे – २.३.५०** कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादि-सम्बन्धः शेषः । तत्र षष्ठी स्यात् ।

**अयं भावः** – शेषो नाम उक्तादन्यः शेषः । कानि तर्हि उक्तानि ? कर्मकर्तृकरण-सम्प्रदानापादानाधिकरणानि उक्तानि । प्रातिपदिकार्थश्च उक्तः । कथम् एषः अर्थः लब्धः ? 'षष्ठी शेषे – २.३.५०' इति सूत्रात्पूर्वं 'कर्मणि द्वितीया – २.३.२' इत्यारभ्य, 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा – २.३.४६' इत्यन्तं षट् कारकाणि प्रातिपदिकार्थश्च अष्टाध्याय्यां पूर्वम् उक्तानि । अतः शेषो नाम उक्तात् अन्यः । कस्तर्हि एतेभ्यः षड्भ्यः कारकेभ्यः प्रातिपदिकार्थाच्च अतिरिक्तः अस्ति ? इति चेत् स्वस्वामिभावः, जन्य-जनकभावः, अवयवावयविभावः इत्यादयः । एवं च कर्मादिकारकेषु द्वितीयादयः प्रवर्तन्ते, प्रातिपदिकार्थे च प्रथमा भवति, स्वस्वामिभावादिसम्बन्धे षष्ठी स्यात् इति पर्यवसन्नः अर्थः । यथा – राज्ञः पुरुषः ।

**i. राज्ञः पुरुषः ।**

राजसम्बन्धी पुरुषः इति राज्ञः पुरुषः इत्यस्य अर्थः । एतादृशे अर्थे राजा विशेषणम् । अतः सः अप्रधानम् । पुरुषः विशेष्यः । अतः सः प्रधानम् । अत्र अप्रधानात् राज्ञः षष्ठी प्रकृतसूत्रेण ।

ii. **दशरथस्य पुत्रः ।**

अस्यार्थः दशरथसम्बन्धी पुत्रः इति । एतादृशे अर्थे दशरथः अप्रधानम् । पुत्रः प्रधानम् । अप्रधानात् दशरथात् षष्ठी प्रकृतसूत्रेण ।

iii. **वृक्षस्य पर्णम् ।**

अस्यार्थः वृक्षसम्बन्धि पर्णम् इति । एतादृशेऽर्थे वृक्षः अप्रधानम् । पर्णं प्रधानम् । अप्रधानात् वृक्षात् षष्ठी प्रकृतसूत्रेण ।

२. **देवदत्तः मातुः स्मरति ।**

अस्मिन् वाक्ये देवदत्तः कर्ता । माता कर्म भवितुं योग्या । यत्र कर्मत्वेन (मातृकर्मकं स्मरणम्) अविवक्षित्वा सम्बन्धसामान्यं (मातृसम्बन्धिस्मरणम्) विवक्ष्यते तत्र षष्ठी स्यात् । अतः अत्र मातृशब्दात् षष्ठी । देवदत्तकर्तृकं मातृसम्बन्धिस्मरणम् इत्यर्थः उपर्युक्तस्य वाक्यस्य । यदि कर्मत्वेन (मातृकर्मकं स्मरणम्) विवक्षा तदा द्वितीया भवेत् एव – 'देवदत्तः मातरं स्मरति' इति । एवं 'भजे शम्भोश्चरणयोः' इति ।

## (आ) कारकषष्ठी

३. **कृष्णस्य गमनम् । श्लोकस्य पाठकः ।**

**कर्तृकर्मणोः कृति – २.३.६५** कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात् ।

प्रायः भावकृत्प्रत्ययान्तानां (क्त्वातुमुनौ विहाय) योगे कर्तुः कर्मणि च षष्ठी स्यात्, ण्वुल् (अक) तृजन्तानां योगे कर्मणि षष्ठी स्यादिति स्मरणं सुकरम् । केषाञ्चन कृदन्तानां योगे 'न लोकाव्यय..' इति निषेधात् केषाञ्चित् तु (स्थायी पिब, दद इत्यादीनां) कर्त्रा वा कर्मणा वा सह प्रयोगस्यैव वैरल्यात् प्रायः इत्युक्तम् ।

i. **कृष्णस्य गमनम्** इत्यत्र गमनाश्रयत्वात् कृष्णः कर्ता । गमनम् इति कृदन्तः (ल्युट् = अन) । अतः तद्योगे कर्तरि षष्ठी । (अन्यथा 'कर्तृकरणयोस्तृतीया' इति तृतीया प्रवर्तेत – 'कृष्णेन गमनम्' इति ।)

ii. **श्लोकस्य पाठकः** इत्यत्र पठनक्रियायाः कर्म श्लोकः । पाठकः इति कृदन्तः (ण्वुल् = अक) । अतः तद्योगे कर्मणि षष्ठी । (अन्यथा 'कर्मणि द्वितीया' इति द्वितीया प्रवर्तेत – 'श्लोकं पाठकः' इति । एवम् 'ओदनस्य पाकः ।', 'धनस्य अपहर्ता' इत्यादयः ज्ञेयाः ।)

४. **साधु खलु । पयसः पानं बालकेन ।**

उभयप्राप्तौ कर्मणि – २.३.६६ उभयोः प्राप्तिः यस्मिन् कृति तत्र कर्मणि एव षष्ठी स्यात् । एकस्मिन् वाक्ये, कृद्योगे उभयोः कर्तृकर्मणोः षष्ठीप्रसक्तौ कर्मणि एव षष्ठी स्यात्, न तु कर्तरि इति नियमार्थम् इदं सूत्रम् ।

**पयसः पानं बालकेन** इत्यत्र पानक्रियाश्रयः बालकः कर्ता । पयः कर्म । पानमिति कृदन्तं (ल्युट्) पदम् । अत्र 'कर्तृकर्मणोः कृति – २.३.६५' इति कर्तुः कर्मणश्च षष्ठी प्राप्ता अनेन नियम्यते 'कर्मणः पयसः एव षष्ठी, न तु कर्तुः बालकात्' इति । अतः 'पयसः पानं बालकेन' इत्यत्र कर्मणः (पयसः) षष्ठी, न तु कर्तुः (बालकेन) ।

५. **गद्यस्य पिपठिषा सर्वस्य । बालकस्य खादिका आम्रस्य ।**

स्त्रीप्रत्यययोरकाकारयोः नायं नियमः (वा) 'स्त्रियां क्तिन्' इति अधिकारविहितयोः अकप्रत्यय-अकारप्रत्यययोः कृतोः योगे 'उभयप्राप्तौ कर्मणि इति बोधितः कर्मण्येव षष्ठी भवति इति नियमो नास्ति' इत्यर्थः । एवञ्च कर्तरि कर्मणि च षष्ठी भवति इति फलितम् ।

i. **गद्यस्य पिपठिषा सर्वस्य** इत्यत्र पठनेच्छायाः कर्म गद्यं, पठनेच्छायाः कर्ता सर्वः । पिपठिषा इति कृत्प्रत्ययान्तः शब्दः । पिपठिषा इत्यत्र 'स्त्रियां क्तिन्' इत्यधिकारे विहितः 'अ' इति प्रत्ययः श्रूयते । अतः कर्तरि कर्मणि च षष्ठी भवति 'गद्यस्य पिपठिषा सर्वस्य' इत्यत्र ।

ii. **बालस्य खादिका आम्रस्य** इत्यत्र बालः कर्ता, आम्रः कर्म, खादिका इति कृदन्तः । खादिका इत्यत्र स्त्रियां क्तिन्नित्यधिकारे विहितः 'अक'प्रत्ययः श्रूयते । अतः कर्तरि कर्मणि च षष्ठी भवति – 'बालकस्य खादिका आम्रस्य' इति ।

६. **शब्दानाम् अनुशासनम् आचार्यस्य/शब्दानाम् अनुशासनम् आचार्येण ।**

शेषे विभाषा (वा) अकप्रत्ययम् अकारप्रत्ययं च वर्जयित्वा अन्येषां कृदन्तानां योगे 'उभयप्राप्तौ कर्मणि – २.३.६६' इति नियमः विकल्प्यते इति वार्तिकस्यार्थः । तथा च कर्तृकर्मणोः उभयोः उपादाने 'कर्मणि एव षष्ठी स्यात्, कर्तरि न' इति नियमः 'उभयप्राप्तौ कर्मणि' इति सूत्रेण कृतः, सः विकल्पितः । अतः उभयोः उपादाने कर्तरि विकल्पेन षष्ठी भवतीति पर्यवसन्नम् । कर्तरि षष्ठ्यां – 'शब्दानाम् अनुशासनम् आचार्यस्य' इति । कर्तरि षष्ठ्यभावे – 'शब्दानाम् अनुशासनम् आचार्येण' इति । अनयोः वाक्ययोः शब्दः कर्म, आचार्यः कर्ता इति ज्ञेयम् ।

## इदमवधेयम् -

**i.** कर्तृकर्मणोः कृति - २.३.६५ इति सूत्रेण कृदन्तानां योगे कर्तरि कर्मणि च षष्ठी विहिता । इदं सूत्रं यत्र केवलं कर्तुः उपादानं, केवलं कर्मणः उपादानं वा तत्र चरितार्थम् । केवलं कर्तुः उपादानं यथा - 'कृष्णस्य गमनम्' इति । केवलं कर्मणः उपादानं यथा - 'श्लोकस्य पठनम्' इति । यत्र तु कर्तुः कर्मणश्च उपादानं तत्र उभयोः अपि षष्ठी 'कर्तृकर्मणोः कृति - २.३.६५' इति सूत्रेण प्राप्ता । तदा 'कर्मणि षष्ठी भवति, न तु कर्तरि' इति नियम्यते - 'उभयप्राप्तौ कर्मणि - २.३.६६' इति सूत्रेण । यथा - 'पयसः पानं बालकेन' इति । किन्तु 'शेषे विभाषा' इति वार्तिकेन कर्तरि अपि षष्ठी विकल्पेन भवति कृद्योगे, किन्तु अकप्रत्ययम्, अकारप्रत्ययं च वर्जयित्वा इति बोधितम् । यथा - 'शब्दानाम् अनुशासनम् आचार्यस्य' इति, 'शब्दानाम् अनुशासनम् आचार्येण' इति च । एवञ्च 'उभयप्राप्तौ कर्मणि' इति सूत्रेण कर्मणि षष्ठी, न तु कर्तरि इति योऽयं निषेधः कृतः सः विकल्पितः इति पर्यवसन्नम् । अतः एव कृद्योगे कर्तृकर्मणोः उभयोः उपादाने कर्तृपदं तृतीयान्तं श्रूयते, षष्ठ्यन्तमपि । कर्मपदन्तु षष्ठ्यन्तम् एव । न कर्मणि षष्ठ्याः निषेधो विकल्पो वा उक्तः ।

**ii.** कर्तृकर्मणोः कृति इति सूत्रेण सर्वेषां कृदन्तानां योगे कर्तरि कर्मणि च षष्ठी विहिता । किन्तु केषाञ्चन कृदन्तानां योगे षष्ठी न भवति । ते के कृदन्ताः इति अवश्यं ज्ञातव्याः । तत्र इदमस्ति सूत्रं - 'न लोकाव्ययनिष्ठाखलर्थतृनाम् - २.३.६९' इति । ल, उ, उक, अव्यय, निष्ठा, खलर्थ, तृन् इत्येतेषां प्रयोगे षष्ठी न स्यादिति सूत्रार्थः । ल = लादेशः = शतृशानचौ - ओदनं पचन्/ओदनं पचमानः । उ = उकारान्तप्रत्ययः - हरिं दिदृक्षुः । कन्याम् अलङ्करिष्णुः । उक = दैत्यान् घातुको हरिः । (तस्याः कामुकः इत्यत्र तु षष्ठी भवति । कामुकशब्दप्रयोगे षष्ठ्याः 'कमेरनिषेधः' इति वार्तिकेन अनिषेधात्) अव्ययम् = क्त्वातुमुनौ - कटं कृत्वा । ओदनं कर्तुम् । निष्ठा = क्तक्तवतू - क्षीरं पीतम् । ओदनं भुक्तवान् । खलर्थः = खल्युचौ (खलर्थकयुच्) = ईषत्करः कटः भवता । ईषत्पानः सोमो भवता । तृन् = शानन्, चानश्, शतृ, तृन् - सोमं पवमानः । आत्मानं मण्डयमानः । वेदम् अधीयन् । कर्ता कटम् ।

**विशेषः -**

**i.** 'कर्ता कटम्' इत्यत्र कर्ता इति तृन्नन्तः शब्दः । अतः षष्ठ्याः निषेधः । 'धनस्य अपहर्ता' इत्यत्र तु अपहर्ता इति तृजन्तः शब्दः । अतो न षष्ठ्याः निषेधः । किन्तु कर्तृकर्मणोः कृति इति षष्ठी एव ।

ii. 'कर्तृकर्मणोः कृति – २.३.६५' इति सूत्रेण यत्र षष्ठी प्रवर्तते तत्र 'षष्ठी शेषे – २.३.५०' इति सूत्रेणापि षष्ठ्याः अवसरः अस्ति । यथा – कृष्णस्य गमनम् । 'कृष्णकर्तृकं गमनम्' इति 'कृष्णसम्बन्धि गमनं वा' इति अस्य वाक्यस्य अर्थः । तत्र आद्ये अर्थे 'कर्तृकर्मणोः कृति' इति सूत्रेण षष्ठी, द्वितीयार्थे तु 'षष्ठी शेषे' इति सूत्रेण षष्ठी इति विवेकः । यत्र 'ओदनं पचन्', 'हरिं दिदृक्षुः' इत्यादौ 'कर्तृकर्मणोः कृति' इति सूत्रेण प्राप्ता षष्ठी 'न लोकाव्यय....' इति सूत्रेण निषिद्धा, तत्रापि 'षष्ठी शेषे' इति सूत्रेण षष्ठी प्रवर्तते एव । यथा – ओदनस्य पचन्, हरेः दिदृक्षुः इति । केवलं शाब्दबोधे भेदः इति ज्ञेयम् ।

७. **मम इष्टः । सर्वेषां ज्ञातः ।**

क्तस्य च वर्तमाने – २.३.६७ वर्तमानार्थस्य क्तस्य योगे षष्ठी स्यात् । क्तप्रत्ययः भूते (श्लोकः पठितः), वर्तमाने (सर्वेषाम् इष्टः), आदिकर्मणि (कटं कृतः), कालसामान्ये च (छात्रस्य हसितम्) विहितः । 'मतिबुद्धिपूजार्थेभ्यश्च – ३.२.१८८' इति सूत्रेण इच्छार्थे, बुद्ध्यर्थे, पूजार्थे च वर्तमाने अपि क्तप्रत्ययः विहितः । तत्र क्तप्रत्ययान्तानां योगे 'न लोकाव्ययनिष्ठाखलर्थतृनाम् – २.३.६९' इति षष्ठ्याः निषेधे प्राप्ते, वर्तमानार्थस्य क्तस्य योगे षष्ठी प्रकृतसूत्रेण विधीयते । मम इष्टः = मत्कर्तृकवर्तमानेच्छाविषयः । सर्वेषां ज्ञातः = सर्वकर्तृकवर्तमानज्ञानविषयः । अत्र इष्टज्ञातौ वर्तमानार्थक-क्तप्रत्ययान्तौ । भूतार्थकक्तप्रत्यययोगे तु षष्ठी न, अपि तु तृतीया एव । यथा – मया इष्टः, सर्वैः ज्ञातः इति । अत्र इष्टज्ञातौ भूतार्थकक्तप्रत्ययान्तौ ।

८. **लोकहितं मम (मया) करणीयम् । मम (मया) हरिः सेव्यः ।**

कृत्यानां कर्तरि वा – २.३.७१ कृत्यप्रत्ययान्तानां योगे कर्तरि षष्ठी वा स्यात् । कृत्प्रत्ययेषु अन्तर्भूताः सप्त कृत्यप्रत्ययाः (तव्य, तव्यत्, अनीयर्, यत्, क्यप्, ण्यत्, केलिमर्) सन्ति । एतेषामपि कृत्संज्ञा अस्ति एव । अतः 'कर्तृकर्मणोः कृति' इति षष्ठी कर्तुः नित्यं प्राप्ता, अनेन विकल्प्यते । षष्ठीपक्षे – 'लोकहितं मम करणीयम्', 'मम हरिः सेव्यः' इति । षष्ठ्यभावपक्षे – 'कर्तृकरणयोस्तृतीया – २.३.१८' इति कर्तरि तृतीया भवति – 'लोकहितं मया करणीयम्', 'मया हरिः सेव्यः' इति ।

## (इ) उपपदषष्ठी*

**९. चन्द्रस्य (चन्द्रेण) सदृशं मुखम् । बलरामस्य (बलरामेण) तुल्यः (=सदृशः) भीमः ।**

तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् – २.३.७२ तुल्यार्थैः योगे तृतीया वा स्यात् पक्षे षष्ठी । षष्ठीपक्षे – 'चन्द्रस्य सदृशं मुखम् ।' षष्ठ्यभावे तृतीया भवति – 'चन्द्रेण सदृशं मुखम्' इति ।

**१०. गृहस्य (गृहाद्) दूरं विद्यालयः । विद्यालयस्य (विद्यालयात्) निकटम् आपणः ।**

दूरान्तिकार्थैः षष्ठी अन्यतरस्याम् – २.२.३४, दूरान्तिकार्थैः शब्दैः योगे षष्ठी स्यात् पञ्चमी च । (पञ्चचत्वारिंशत्तमं (४५) पृष्ठं परिशील्यताम् ।)

**११. प्राणिनां (प्राणिषु) मानवः श्रेष्ठः । गवां (गोषु) कपिला बहुक्षीरा । अध्वगानां (अध्वगेषु) धावन् शीघ्रतमः । छात्राणां (छात्रेषु) रविः पटुः ।**

यतश्च निर्धारणम् – २.३.४१ जातिगुणक्रियासंज्ञाभिः समुदायात् एकदेशस्य पृथक्करणं निर्धारणं, यतः ततः षष्ठीसप्तम्यौ स्तः । शब्दः चतुर्धा – १. जातिवाचकः – (यथा – वृक्षः, गौः) । २. गुणवाचकः – (यथा – शुक्लः, कपिलः) ३. क्रियावाचकः – (यथा – गच्छन्, धावन्) । ४. संज्ञावाचकः – (यथा – देवदत्तः, चैत्रः) च इति । कश्चित् समुदायो भवति । समुदायान्तर्गतः एकदेशः भवति । सः च एकदेशः जातिः, गुणः, क्रिया, संज्ञा वा भवति । एतादृशस्य एकदेशस्य समुदायात् पृथक्करणं श्रेष्ठत्वादिधर्मं पुरस्कृत्य यदा विवक्ष्यते, तदा समुदायात् षष्ठीसप्तम्यौ भवतः ।

i. **प्राणिनां मानवः श्रेष्ठः** इत्यत्र समुदायः प्राणिनः, तदेकदेशः मानवः । तस्य पृथक्करणं श्रेष्ठत्वेन धर्मेण विवक्षितः । अतः प्राणिरूपसमुदायात् षष्ठी भवति । जात्या पृथक्करणस्य इदम् उदाहरणम् । अत्र एकदेशभूतः मानवः मनुष्यत्वजातियुक्तः (जात्युपसर्जनव्यक्तिवाचकः) । षष्ठ्यभावे सप्तमी भवति – 'प्राणिषु मानवः श्रेष्ठः' इति ।

ii. **गवां कपिला बहुक्षीरा** इत्यत्र समुदायः गावः, तदेकदेशः कपिला, तस्याः पृथक्करणं बहुक्षीरत्वेन धर्मेण विवक्षितः । अतः गोरूपसमुदायात्

---

*षष्ठी द्विधा – शेषषष्ठी कारकषष्ठी च इति पूर्वम् उक्तम् । उपपदषष्ठी इति विभागः न दर्शितः । बालमनोरमाव्याख्यानुसारेण अयं विभागः दर्शितः ।

षष्ठी भवति । गुणेन पृथक्करणस्य इदम् उदाहरणम् । अत्र एकदेशभूता कपिला कापिल्यगुणयुक्ता । (गुणोपसर्जनद्रव्यवाचिका) षष्ठ्यभावे सप्तमी भवति – 'गोषु कपिला बहुक्षीरा' इति ।

iii. **अध्वगानां धावन् शीघ्रतमः** इत्यत्र अध्वगाः समुदायः, तदेकदेशः धावन् । तस्य पृथक्करणं शीघ्रतमत्वेन धर्मेण विवक्षितः । अतः अध्वगरूपसमुदायात् षष्ठी भवति । क्रियया पृथक्करणस्य इदम् उदाहरणम् । अत्र एकदेशभूतः धावन् धावनक्रियायुक्तः (क्रियोपसर्जनद्रव्यवाचकः) ।

iv. **छात्राणां रविः पटुः** इत्यत्र छात्राः समुदायः, रविः तदेकदेशः । तस्य पृथक्करणं पटुत्वेन धर्मेण विवक्षितः । अतः छात्ररूपसमुदायात् षष्ठी । संज्ञया पृथक्करणस्य इदम् उदाहरणम् । अत्र एकदेशभूतः रविः रविरिति संज्ञायुक्तः । (संज्ञोपसर्जनद्रव्यवाचकः)

**१२. आयुर्नश्यति पश्यतां (पश्यत्सु) प्रतिदिनम् । धनं जहार पश्यतां (पश्यत्सु) ।**

षष्ठी चानादरे – २.३.३८ अनादराधिक्ये भावलक्षणे षष्ठीसप्तम्यौ स्तः । अनादरे गम्यमाने ज्ञापकक्रियाश्रयात् षष्ठीसप्तम्यौ भवतः । ('यस्य च भावेन...' (चतुःपञ्चाशत्तमे (५४) पृष्ठे) इति सूत्रे यद्विवरणं दत्तं तत्सर्वम् अत्रापि अनुसन्धेयम् । अनादरः केवलं प्रतीयते इति विशेषः ।) 'पश्यतः जनान् अनादृत्य आयुः नष्टं भवत्येव' इत्यर्थः । 'पश्यतो जनान् अनादृत्य धनम् अपजहार' इति द्वितीयवाक्यस्य अर्थः ।

* * *

# ९. सप्तमीविभक्तिः

## (अ) कारकसप्तमी

कारकसप्तमी, उपपदसप्तमी, चेति सप्तमी द्विधा । अधिकरणसंज्ञां पुरस्कृत्य प्रवर्तमाना सप्तमी कारकसप्तमी । अधिकरणसंज्ञा च एकेनैव सूत्रेण विहिता । यदा अधिकरणसंज्ञा प्रवृत्ता भवति तदा 'सप्तम्यधिकरणे च – २.३.३६' (अधिकरणे सप्तमी स्यात् । चकाराद्दूरान्तिकार्थेभ्यः ।) इति सूत्रेण सप्तमी प्रवर्तते । बहुभिः सूत्रैः वार्तिकैः च उपपदसप्तमी विहिता । कर्मप्रवचनीयसंज्ञां पुरस्कृत्य सप्तमी तु एकेनैव सूत्रेण विहिता ।

१. **बालः कटे उपविशति । पाचकः स्थाल्याम् ओदनं पचति । तस्य पठने इच्छा अस्ति । तिलेषु तैलम् अस्ति ।**

आधारोऽधिकरणम् – १.४.४५ कर्तृकर्मद्वारा तन्निष्ठक्रियायाः आधारः कारकम् अधिकरणसंज्ञः स्यात् । (अष्टमं (८) पृष्ठं पश्यन्तु ।

आधारस्त्रिधा – १. औपश्लेषिकः २. वैषयिकः ३. अभिव्यापकश्चेति ।

i. एकदेशव्याप्तिरूपः आधारः **औपश्लेषिकः** । सः च संयोगमूलकः समवायमूलको वा भवति । अयम् आधारः स्वस्य एकदेशव्याप्तिरूपो भवति, न तु सकलावयवव्याप्तिरूपः । यथा – कटे उपविशति । अत्र कटः उपवेशनक्रियायाः आधारः । किन्तु उपवेशनक्रिया कटस्य एकदेशे भवति, न तु कृत्स्ने कटे । अत्र सम्बन्धः संयोगः । अतः अयम् औपश्लेषिकः आधारः । 'पाचकः स्थाल्याम् ओदनं पचति' इत्यत्र तु ओदनं कर्म । तत्कर्मनिष्ठक्रियायाः आधारः स्थाली । एषोऽपि औपश्लेषिकः एव ।

ii. विषयतादिसम्बन्धमूलकः आधारः **वैषयिकः** ।
अत्र संयोगः समवायो वा न भवति । अतः औपश्लेषिकाभिव्यापकातिरिक्तः सर्वः अपि आधारः वैषयिकः इति ज्ञेयम् । यथा – पठने इच्छा अस्ति । पठनविषयिणी इच्छा इत्यर्थः । अत्र पठनम् आधारः । सम्बन्धश्च विषयता,

न संयोगः समवायो वा । **इदं ज्ञेयम्** – 'पक्षिणः आकाशे डयन्ते ।' 'शिष्यः गुरौ वसति ।' इत्यादीनि वैषयिकस्यैव उदाहरणानि । न हि अत्र संयोगः समवायो वा सम्बन्धः । अतो यत्र संयोगसमवायसम्बन्धौ न भवतः तत्र सर्वत्रापि वैषयिकः आधारः इति निश्चेतव्यम् ।

iii. संयोगसमवायमूलकः सकलावयवव्याप्तिरूपः **अभिव्यापकः** । यथा – तिलेषु तैलम् अस्ति । अत्र आधारः तिलानि । तिलानां सकलावयवेषु तैलम् (तैलस्य सत्ता) अस्ति । सम्बन्धश्च समवायः । अतः अयम् अभिव्यापकः आधारः । एवं 'सर्वस्मिन् आत्मा अस्ति ।' 'दध्नि सर्पिः अस्ति ।' इत्यादीनि ।

## (आ) उपपदसप्तमी

**२. बालेषु अधीयानेषु गतः । गोषु दुह्यमानासु गतः ।**

यस्य च भावेन भावलक्षणम् – २.३.३७ यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी स्यात् । ज्ञापकक्रियाश्रयात् सप्तमीति फलितार्थः । अत्र द्वे क्रिये भवतः । तयोः एकस्याः क्रियायाः कालः निर्ज्ञातः भवति । अपरस्याः क्रियायाः कालः अनिर्ज्ञातः भवति । तयोः निर्ज्ञातकालक्रिया ज्ञापिका भवति । अनिर्ज्ञातकालक्रिया ज्ञाप्या भवति । तत्र निर्ज्ञातकालक्रियाश्रयात् सप्तमी भवति । निर्ज्ञातकालक्रियाश्रयः कर्ता अपि भवति कर्म अपि ।

i. **बालेषु अधीयानेषु गतः** इत्यत्र अध्ययनं गमनञ्चेति द्वे क्रिये । कदा गतः इति प्रश्ने 'अधीयानेषु बालेषु' इत्युत्तरम् । अत्र अध्ययनम् अपि ज्ञातम् । तस्य कालोऽपि ज्ञातः । तथैव गमनं ज्ञातम् । किन्तु तस्य कालः न ज्ञातः । अतः अध्ययनक्रियायाः कालः निर्ज्ञातः । गमनक्रियायाः कालः अनिर्ज्ञातः । अतः अनिर्ज्ञातकालगमनक्रिया ज्ञाप्या । निर्ज्ञातकालाध्ययन-क्रिया ज्ञापिका । 'बालेषु अधीयानेषु गतः' इत्यत्र बालाः निर्ज्ञातकाल-ज्ञापकक्रियाश्रयः । अतः बालशब्दात् सप्तमी । अधीयानेषु इत्यत्र तु 'बालेषु' इत्यस्य विशेषणत्वात् सप्तमी । अस्मिन् वाक्ये कर्तृगता ज्ञापकक्रिया । अध्ययनक्रियायाः आश्रयः बालाः कर्तारः खलु ।

ii. **गोषु दुह्यमानासु गतः** इत्यत्रापि दोहनं गमनञ्चेति द्वे क्रिये । कदा गतः इति प्रश्ने 'दुह्यमानासु गोषु' इत्युत्तरम् । अत्र दोहनं ज्ञातम् । तस्य कालोऽपि ज्ञातः । गमनं ज्ञातम् । तस्य कालः न ज्ञातः । अतः दोहनक्रियायाः कालः निर्ज्ञातः । गमनक्रियायाः कालः अनिर्ज्ञातः । अतः

अनिर्ज्ञातकालगमनक्रिया ज्ञाप्या । निर्ज्ञातदोहनक्रिया ज्ञापिका । 'गोषु दुह्यमानासु गतः' इत्यत्र गावः निर्ज्ञातकालज्ञापकक्रियाश्रयः । अतः गोशब्दात् सप्तमी । 'दुह्यमानासु' इत्यत्र तु 'गोषु' इत्यस्य विशेषणत्वात् सप्तमी । अस्मिन् वाक्ये ज्ञापकक्रिया कर्मगता । दोहनक्रियायाः कर्मभूताः गावः ननु ।

iii. **अधीती व्याकरणे ।**

क्तस्येन्विषयस्य कर्मण्युपसङ्ख्यानम् (वा) इन्प्रत्ययान्तो यः क्तप्रत्ययान्तः तस्य कर्मणि सप्तमी स्यात् इत्यर्थः । **अधीती व्याकरणे** । अधीतम् अनेन - इति विग्रहे तद्धितः इन्प्रत्ययः (अधीत + इन्) भवति । अतः अधीती इति इन्प्रत्ययान्तः क्तप्रत्ययान्तः । अधीती = अधीतवान् इत्यर्थः । किम् अधीतवान् इति जिज्ञासायां व्याकरणं कर्मत्वेन अन्वेति । अतः द्वितीयायाः प्राप्तौ सप्तमी विधीयते । व्याकरणकर्मकाध्ययनकर्ता इत्यर्थः ।

* * *

# १०. कारकसङ्ग्रहः

| कारकसूत्राणि अर्थाः च | कारकाणि | विभक्तयः | उदाहरणानि |
|---|---|---|---|
| १. स्वतन्त्रः कर्ता – (१.४.५४)<br>व्यापाराश्रयः कर्ता । | कर्ता | तृतीया<br>प्रथमा*<br>षष्ठी | – कर्मप्र – गुरुणा पाठः क्रियते ।<br>– कर्तृप्र – छात्राः शालां प्रविशन्ति ।<br>– कृष्णस्य गमनम् । |
| २. कर्तुरीप्सिततमं कर्म – (१.४.४३)<br>फलेन सम्बन्धुम् इष्यमाणं कर्म । | कर्म | द्वितीया<br>प्रथमा*<br>षष्ठी | – कर्तृप्र – धीराः पर्वतान् आरोहन्ति ।<br>– कर्मप्र – रोगिणा वैद्यः अवलोक्यते ।<br>– रामायणस्य रचयिता । |
| ३. साधकतमं करणम् – (१.४.४४)<br>यत् स्वव्यापारसमनन्तरम् एव<br>फलोत्पादकं तत् करणम् । | करणम् | तृतीया | – रामः बाणेन रावणं हन्ति । |
| ४. कर्मणा यमभिप्रैति स<br>सम्प्रदानम् – (१.४.३२)<br>कर्मणा सम्बन्धुं यम् अभिप्रैति<br>(इच्छति) सः सम्प्रदानम् । | सम्प्रदानम् | चतुर्थी | – विश्वासः मित्राय पुस्तकं ददाति । |

* प्रातिपदिकार्थम् अवलम्ब्य एषा प्रथमा ।

| | | | |
|---|---|---|---|
| ५. ध्रुवमपायेऽपादानम् - (१.४.२४) विभागाश्रयः अपादानम् । | अपादानम् | पञ्चमी | - बालः वाहनात् पतति । |
| ------------- | ------- | षष्ठी | - राज्ञः पुरुषः । |
| ६. आधारोऽधिकरणम् - (१.४.४५) विद्यमानफलस्य वा आधारः अधिकरणम् । | अधिकरणम् कर्तरि विद्यमानक्रियायाः कर्मणि | सप्तमी | - सर्वे कटे उपविशन्ति । - मोक्षे इच्छा अस्ति । - तिले तैलम् अस्ति । |

**विशेषः -** १. यः क्रियया अन्वेति = सम्बन्धं प्राप्नोति सः कारकम् ।
२. कर्तृकारकात् परा प्रथमा, तृतीया, षष्ठी च श्रूयते ।
३. कर्मकारकात् परा द्वितीया, प्रथमा, षष्ठी च श्रूयते ।
४. करणात् तृतीया, सम्प्रदानात् चतुर्थी, अपादानात् पञ्चमी, अधिकरणात् सप्तमी च नियता ।

# ११. इदम् अवधेयम्

१. पुष्पेभ्यः स्पृहयति । पुष्पाणि स्पृहयति ।
२. ग्रामं गच्छति । ग्रामाय गच्छति ।
३. अलं विस्तरेण । भीमः बकाय अलम् ।
४. आलस्येन न पठति । आलस्यात् न पठति ।
५. तक्रं विना कथं भोजनम् ? तेन विना तृणमपि न चलति । रामात् विना सीता न तिष्ठति ।
६. ग्रामस्य अन्तिकं / दूरं वृक्षः । नगरस्य अन्तिकेन / दूरेण ग्रामः । गृहस्य अन्तिकात् / दूरात् गोष्ठम् अस्ति । ग्रामस्य अन्तिके / दूरे जलपातः ।
७. गृहात् अन्तिकं / दूरं विद्यालयः । गृहस्य अन्तिकं / दूरं विद्यालयः ।
८. किं निमित्तं वसति ? केन निमित्तेन वसति ? कस्मै निमित्ताय गच्छति ? कस्मात् निमित्तात् आगतः ? कस्य निमित्तस्य कार्यक्रमः ? कस्मिन् निमित्ते इदं प्रवृत्तम् ? को हेतुः ? केन हेतुना ? इत्यादिः ।
९. चन्द्रेण सदृशं मुखम् । चन्द्रस्य सदृशं मुखम् ।
१०. प्राणिनां मानवः श्रेष्ठः । प्राणिषु मानवः श्रेष्ठः ।

---

१. स्पृहयतेः प्रयोगे ईप्सितात् द्वितीया, चतुर्थी च भवतः । (स्पृहेरीप्सितः - १.४.३६)
२. गत्यर्थकधातूनां प्रयोगे कर्मणो द्वितीया चतुर्थी च भवतः । (गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि - २.३.१२)
३. निषेधार्थकस्य 'अलम्' इति शब्दस्य प्रयोगे तृतीया, पर्याप्त्यर्थे तु चतुर्थी भवति । [गम्यमानापि क्रिया कारकविभक्तिप्रयोजिका (वा)] (नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च - २.३.१६)
४. गुणवाचकस्य हेत्वर्थे विद्यमानस्य प्रयोगे तृतीया, पञ्चमी च भवतः स्त्रीलिङ्गे तु तृतीयैव । (विभाषा गुणेऽस्त्रियाम् - २.३.२५)
५. विना प्रयोगे द्वितीया, तृतीया, पञ्चमी च भवन्ति । (पृथग्विनानाभिः तृतीयान्यतरस्याम् - २.३.३२)
६. अद्रव्यवचनेभ्यो दूरान्तिकार्थेभ्यो द्वितीया, तृतीया, पञ्चमी, सप्तमी च भवन्ति । (दूरान्तिकार्थेभ्यो द्वितीया च - २.३.३५, सप्तम्यधिकरणे च - २.३.३६)
७. दूरार्थैः अन्तिकार्थैश्च शब्दैः योगे पञ्चमी षष्ठी च स्यात् । (दूरान्तिकार्थैः षष्ठी अन्यतरस्याम् - २.३.३४)
८. निमित्तपर्यायाणां प्रयोगे, तेषां तद्विशेषणानां च प्रायः सर्वाः विभक्तयः भवन्ति । [निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम् (वा)]
९. सदृशार्थकशब्दस्य प्रयोगे उपमानवाचकात् तृतीया, षष्ठी च भवतः । (तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् - २.३.७२)
१०. यस्मात् समुदायात् जातिगुणक्रियासंज्ञाभिः एकदेशस्य पृथक्करणं क्रियते तस्मात् समुदायात् षष्ठी, सप्तमी च भवतः । (यतश्च निर्धारणम् - २.३.३८)

# परिशिष्टम् - १

## कारकाणाम् अन्तर्भेदाः

षट् कारकाणि इत्युक्तम् । तेषां कारकाणाम् अन्तर्भेदाः । यथा -

**१. कर्ता -**

i. शुद्धः ii. प्रयोजको हेतुः iii. कर्मकर्ता - चेति कर्ता त्रिविधः ।

यथा - i. शुद्धकर्ता[1] - मया हरिः सेव्यते ।
ii. हेतुकर्ता[2] - हरिणा भक्तेन कार्यं कार्यते ।
iii. कर्मकर्ता[3] - वसुदेवः कृष्णं गोकुलं गमयति ।
*(तृतीयवाक्ये कृष्णः कर्मकर्ता)*

**२. कर्म -**

i. निर्वर्त्यम् ii. विकार्यम् iii. प्राप्यम् iv. उदासीनम् v. द्वेष्यम् vi. संज्ञान्तरैः अनाख्यातम् vii. अन्यपूर्वकं चेति सप्तविधम् ।

यथा - i. निर्वर्त्यम्[4] - कुम्भकारः घटं करोति ।
ii. विकार्यम्[5] - स्वर्णकारः सुवर्णं कुण्डलं करोति ।
iii. प्राप्यम्[6] - बालः घटं पश्यति ।
iv. उदासीनम्[7] - स ग्रामं गच्छन् तृणं स्पृशति ।
v. द्वेष्यम्[8] - वैरिणा निगृह्यमाणः सैनिकः विषं भुङ्क्ते ।
vi. संज्ञान्तरैः अनाख्यातम्[9] - गोपालः गां पयो दोग्धि ।
vii. अन्यपूर्वकम्[10] - हरिः वैकुण्ठम् अधिशेते ।

---

1. 'स्वतन्त्रः कर्ता' इति सूत्रेण विहितः कर्ता ।
2. 'तत्प्रयोजको हेतुश्च' इति सूत्रेण विहितः कर्ता ।
3. 'गतिबुद्धि ...' इति सूत्रेण कर्मसंज्ञासहितः प्रयोज्यकर्ता ।
4. निर्वत्यम् – उत्पाद्यम् ।
5. यदा प्रकृतिः परिणामित्वेन विवक्ष्यते तदा विकार्यं कर्म । सुवर्णं प्रकृतिः । कुण्डलं विकृतिः ।
6. क्रियांकृतविशेषाणां सिद्धिः यत्र न गम्यते, तत् प्राप्यं कर्म ।
7. औदासीन्येन प्राप्यम् उदासीनम् ।
8. अनीप्सितं द्वेष्यम् ।
9. अपादानादिभिः अविवक्षितम् 'अकथितं च' इति सूत्रेण विहितम् ।
10. 'अधिशीङ्...' इत्यादिसूत्रविहितम् ।

३. करणम् -

एकविधमेव करणम् ।
यथा - रामः रावणं बाणेन हन्ति ।

४. सम्प्रदानम् -

i. अनिराकर्तृ ii. प्रेरयितृ iii. अनुमन्तृ च इति सम्प्रदानं त्रिविधम् ।
यथा - i. अनिराकर्तृ[11] - वटुः सूर्याय अर्घ्यं ददाति ।
ii. प्रेरयितृ[12] - राजा विप्राय गां ददाति ।
iii. अनुमन्तृ[13] - शिष्यः उपध्यायाय गां ददाति ।

५. अपादानम् -

i. निर्दिष्टविषयम् ii. उपात्तविषयम् iii. अपेक्षितक्रियश्चेति त्रिविधम् ।
यथा - i. निर्दिष्टविषयम्[14] - चैत्रः अश्वात् पतति ।
ii. उपात्तविषयम्[15] - बलाहकाद् विद्योतते विद्युत् ।
iii. अपेक्षितक्रियम्[16] - कुतो भवान् ? पाटलीपुत्रात् ।

६. अधिकरणम् -

i. औपश्लेषिकम् ii. वैषयिकम् iii. अभिव्यापकं चेति त्रिविधम् ।
यथा - i. औपश्लेषिकम्[17] - शिशुः कटे शेते ।
ii. वैषयिकम्[18] - मोक्षे इच्छा अस्ति ।
iii. अभिव्यापकम्[19] - तिलेषु तैलम् अस्ति ।

---

11. यः सम्प्रदानं सः न याचते, न अनुमन्यते, न वा निराकरोति ।
12. यः सम्प्रदानं सः आदौ याचते ।
13. यः सम्प्रदानं सः न याचते, किन्तु अनुमन्यते ।
14. यत्र साक्षात् धातुना गतिः निर्दिश्यते ।
15 यत्र धात्वन्तरार्थाङ्गं स्वार्थं धातुराह (यथा - निःसरणाङ्गे विद्योतने द्युतिरस्ति सम्प्रत्युदाहरणे)
16. अनुपात्तधात्वर्थक्रियासाकाङ्क्षम् । (प्रकृतोदाहणे धातुः अनुपात्तः)
17. संयोगादिसम्बन्धनिबन्धनम् ।
18. विषयत्वसम्बन्धात् आगतम् । (औपश्लेषिकाभिव्यापकातिरिक्तम्)
19. सकलावयवव्याप्तिकृतम् ।

## परिशिष्टम् - २

### (अ) द्विकर्मकस्थाने अपादानादीनाम् अविवक्षायां व्यवस्था

दुहादयो धातवः द्विकर्मकाः भवन्ति । द्वयोः कर्मणोः एकतरं गौणम् अपरं प्रधानं च भवति । अपादानादिविशेषैः अविवक्षितं कारकं गौणं कर्म भवति । ततो द्वितीयापि भवति । यदि अपादानादित्वरूपेणैव विवक्षा भवति, तदा तत्तत्कारकादिसम्बन्धिनी विभक्तिरेव प्रवर्तते । यथा -

| *अपादानादिविशेषैः अविवक्षितत्वे वाक्यानि इत्थं सम्भवन्ति ।* | *अपादानादिविशेषैः विवक्षितत्वे वाक्यानि इत्थं सम्भवन्ति ।* |
|---|---|
| १. गोपालः गां पयो दोग्धि । | १. गोपालः गोः पयः दोग्धि । |
| २. वामनः बलिं वसुधां याचते । | २. वामनः बलेः वसुधां याचते । |
| ३. पाचकः तण्डुलान् ओदनं पचति । | ३. पाचकः तण्डुलानाम् ओदनं पचति । |
| ४. राजा गर्गान् शतं दण्डयति । | ४. राजा गर्गेभ्यः शतं दण्डयति । |
| ५. गोपः गां व्रजम् अवरुणद्धि । | ५. गोपः गां व्रजे अवरुणद्धि । |
| ६. पान्थः माणवकं पन्थानं पृच्छति । | ६. पान्थः माणवकात् पन्थानं पृच्छति । |
| ७. वटुः वृक्षं फलानि अवचिनोति । | ७. वटुः वृक्षात् फलानि अवचिनोति । |
| ८. पिता माणवकं धर्मं ब्रूते । | ८. पिता माणवकाय धर्मं ब्रूते । |
| ९. गुरुः माणवकं धर्मं शास्ति । | ९. गुरुः माणवकाय धर्मं शास्ति । |
| १०. चैत्रः देवदत्तं शतं जयति । | १०. चैत्रः देवदत्तात् शतं जयति । |
| ११. सुरासुरगणः सुधां क्षीरनिधिं मथ्नाति । | ११. सुरासुरगणः सुधां क्षीरनिधौ मथ्नाति । |
| १२. चैत्रः देवदत्तं शतं मुष्णाति । | १२. चैत्रः देवदत्तात् शतं मुष्णाति । |
| १३. कृषिकः ग्रामम् अजां नयति । | १३. कृषिकः ग्रामे अजां नयति । |
| १४. गोपः वृषभं गोष्ठं हरति । | १४. गोपः वृषभं गोष्ठे हरति । |
| १५. गोपः गोवत्सं गाष्ठं कर्षति । | १५. गोपः गोवत्सं गाष्ठे कर्षति । |
| १६. कृषिकः अजापुत्रं नगरं वहति । | १६. कृषिकः अजापुत्रं नगरे वहति । |

अपादानादिविशेषैः विविक्षिते वाक्यानि कथं भवेयुः इत्यत्र नागेशस्य अन्येषाञ्च मतभेदः अस्ति । अत्र तु तत्त्वबोधिनीं बालमनोरमां च अनुसृत्य वाक्यानि लिखितानि ।

## (आ) द्विकर्मकस्थले कर्मणि प्रयोगः ।

इमानि द्विकर्मकवाक्यानि कर्मणिप्रयोगे (कर्मवाच्ये) एवं प्रयोक्तव्यानि -

| *कर्तरि प्रयोगः* | *कर्मणि प्रयोगः* |
|---|---|
| १. गोपालः गां पयो दोग्धि । | १. गोपालेन गौः पयः दुह्यते । |
| २. वामनः बलिं वसुधां याचते । | २. वामनेन बलिः वसुधां यच्यते । |
| ३. पाचकः तण्डुलान् ओदनं पचति । | ३. पाचकेन तण्डुलाः ओदनं पच्यते । |
| ४. राजा गर्गान् शतं दण्डयति । | ४. राज्ञा गर्गाः शतं दण्ड्यते । |
| ५. गोपः गां व्रजम् अवरुणद्धि । | ५. गोपेन गां व्रजः अवरुध्यते । |
| ६. पान्थः माणवकं पन्थानं पृच्छति । | ६. पान्थेन माणवकः पन्थानं पृच्छ्यते । |
| ७. वटुः वृक्षं फलानि अवचिनोति । | ७. वटुना वृक्षः फलानि अवचीयते । |
| ८. पिता माणवकं धर्मं ब्रूते । | ८. पित्रा माणवकः धर्मं उच्यते । |
| ९. गुरुः माणवकं धर्मं शास्ति । | ९. गुरुणा माणवकः धर्मं शास्यते । |
| १०. चैत्रः देवदत्तं शतं जयति । | १०. चैत्रेण देवदत्तः शतं जीयते । |
| ११. सुरासुरगणः सुधां क्षीरनिधिं मथ्नाति । | ११. सुरासुरगणेन सुधां क्षीरनिधिः मथ्यते । |
| १२. चैत्रः देवदत्तं शतं मुष्णाति । | १२. चैत्रेण देवदत्तः शतं मुष्यते । |
| १३. कृषिकः ग्रामम् अजां नयति । | १३. कृषिकेण ग्रामम् अजा नीयते । |
| १४. गोपः वृषभं गोष्ठं हरति । | १४. गोपेन वृषभः गोष्ठं ह्रियते । |
| १५. गोपः गोवत्सं गाष्ठं कर्षति । | १५. गोपेन गोवत्सः गोष्ठं कृष्यते । |
| १६. कृषिकः अजापुत्रं नगरं वहति । | १६. कृषिकेण अजापुत्रः नगरम् उह्यते । |

'दुह्यते' इत्यारभ्य 'मुष्यते' इत्यन्तं यावत् गौणे कर्मणि लकारः कृतः । अतो गौणकर्मणः अभिधानात् गौणकर्मणो न द्वितीया, अपि तु प्रथमा । 'नीयते इत्यारभ्य उह्यते' इत्यन्तं यावत् प्रधाने कर्मणि लकारः कृतः । अतः प्रधानकर्मणः अभिधानात् प्रधानकर्मणः परा द्वितीया न, अपि तु प्रथमा ।

अत्र दुहादयोः द्वादश धातवः । तेषाम् एकः गणः । नीहृकृष्वहाश्चत्वारो धातवः । तेषाम् अपरः गणः । दुहादीनां गौणे कर्मणि लकारः । नीहृकृष्वहां प्रधाने कर्मणि लकारः इति विवेकः । **''गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्''** इति वचनम् अत्र प्रमाणम् ।

## (इ) णिजन्तस्य कर्मणिप्रयोगः

*गतिबुद्ध्यादेः (एकविंशतितमं (२१) पृष्ठं पश्यन्तु ) उदाहरणानां कर्तरि कर्मणि च व्यवस्था इत्थं वर्तते –*

| | |
|---|---|
| १. गुरुः छात्रं श्लोकार्थं बोधयति । | १. गुरुणा छात्रः श्लोकार्थं बोध्यते / गुरुणा छात्रं श्लोकार्थः बोध्यते । |
| २. माता शिशुम् ओदनं भोजयति । | २. मात्रा शिशुः ओधनं भोज्यते / मात्रा शिशुम् ओदनः भोज्यते । |
| ३. अध्यापकः बालं वेदम् अध्यापयति । | ३. अध्यापकेन बालः वेदम् अध्याप्यते / अध्यापकेन बालं वेदः अध्याप्यते । |
| ४. पिता बालं विद्यालयं गमयति । | ४. पित्रा बालः विद्यालयं गम्यते । |
| ५. तरुणः वृद्धम् उपवेशयति । | ५. तरुणेन वृद्धः उपवेश्यते । |
| ६. गुरुः विद्यार्थिनं पद्यार्थं जल्पयति | ६. गुरुणा विद्यार्थी पद्यार्थं जल्प्यते । |
| ७. पिता शिशुं शुकं दर्शयति । | ७. पित्रा शिशुः शुकं दर्श्यते । |
| ८. स्वामी देवदत्तं कटं कारयति । | ८. स्वामिना देवदत्तः कटः कार्यते । |
| ९. स्वमी भृत्यं घटं हारयति । | ९. स्वामिना भृत्यः घटं हार्यते । |

बुद्ध्यर्थकस्य भक्षार्थकस्य शब्दकर्मकाणाञ्च प्रयोज्ये कर्मणि प्रधानकर्मणि वा लकारः । त्रीन् एतान् विहाय अन्येषां प्रयोज्ये कर्मणि लकारः । (अण्यन्तावस्थायां यः कर्ता स एव ण्यन्तावस्थायां प्रयोज्यकर्म भवति । यथा – छात्रः श्लोकार्थं बोधति । गुरुः छात्रं श्लोकार्थं बोधयति । अत्र द्वितीयवाक्ये छात्रः प्रयोज्यकर्म । एवम् अन्यत्र ऊह्यम् । विस्तरस्तु गतिबुद्धिसूत्रव्याख्याने द्रष्टव्यः ।) अत्र इदं वचनं प्रमाणम् –

*बुद्धिभक्षार्थयोः शब्दकर्मणां च निजेच्छया ।*
*प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः ॥*

# परिशिष्टम् - ३

## अष्टाध्यायीसूत्राणि

### (अ) कारकसंज्ञाविधायकानि सूत्राणि

### प्रथमाध्याये तृतीयः पादः

२३. कारके ।
२४. ध्रुवमपायेऽपादानम् ।
२५. भीत्रार्थानां भयहेतुः ।
२६. पराजेरसोढः ।
२७. वारणार्थानामीप्सितः ।
२८. अन्तर्धौ येनादर्शनमिच्छति ।
२९. आख्यातोपयोगे ।
३०. जनिकर्तुः प्रकृतिः ।
३१. भुवः प्रभवः ।
३२. कर्मणा यमभिप्रैति स सम्प्रदानम् ।
३३. रुच्यर्थानां प्रीयमाणः ।
३४. श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ।
३५. धारेरुत्तमर्णः ।
३६. स्पृहेरीप्सितः ।
३७. क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः।
३८. क्रुधद्रुहोरुपसृष्टयोः कर्म ।
३९. राधीक्ष्योर्यस्य विप्रश्नः।
४०. प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता ।
४१. अनुप्रतिगृणश्च ।
४२. साधकतमं करणम् ।
४३. दिवः कर्म च ।
४४. परिक्रयणे सम्प्रदानमन्यतरस्याम् ।
४५. आधारोऽधिकरणम् ।
४६. अधिशीङ्स्थासां कर्म ।
४७. अभिनिविशश्च ।
४८. उपान्वध्याङ्वसः ।
४९. कर्तुरीप्सिततमं कर्म ।
५०. तथायुक्तं चानीप्सितम् ।
५१. अकथितं च ।
५२. गतिबुद्धिप्रत्यवसानार्थशब्द-कर्माकर्मकाणामणि कर्ता स णौ ।
५३. ह्रक्रोरन्यतरस्याम् ।
५४. स्वतन्त्रः कर्ता ।
५५. तत्प्रयोजको हेतुश्च

### (आ) विभक्तिविधायकानि सूत्राणि

### द्वितीयाध्याये तृतीयः पादः

१. अनभिहिते ।
२. कर्मणि द्वितीया ।
३. तृतीया च होश्छन्दसि ।
४. अन्तरान्तरेण युक्ते ।
५. कालाध्वनोरत्यन्तसंयोगे ।
६. अपवर्गे तृतीया ।
७. सप्तमीपञ्चम्यौ कारकमध्ये ।
८. कर्मप्रवचनीययुक्ते द्वितीया ।
९. यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ।
१०. पञ्चम्यपाङ्परिभिः ।
११. प्रतिनिधिप्रतिदाने च यस्मात् ।
१२. गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ।
१३. चतुर्थी सम्प्रदाने ।
१४. क्रियार्थोपपदस्य च कर्मणि स्थानिनः ।
१५. तुमर्थाच्च भाववचनात् ।
१६. नमःस्वस्तिस्वाहास्वधालं-वषड्योगाच्च ।

१७. मन्यकर्मण्यनादरे विभाषाप्राणिषु ।
१८. कर्तृकरणयोस्तृतीया ।
१९. सहयुक्तेऽप्रधाने ।
२०. येनाङ्गविकारः ।
२१. इत्थम्भूतलक्षणे ।
२२. संज्ञोऽन्यतरस्यां कर्मणि ।
२३. हेतौ ।
२४. अकर्तर्यृणे पञ्चमी ।
२५. विभाषा गुणेऽस्त्रियाम् ।
२६. षष्ठी हेतुप्रयोगे ।
२७. सर्वनाम्नस्तृतीया च ।
२८. अपादाने पञ्चमी ।
२९. अन्यारादितरर्तेदिक्छब्दाञ्चूत्तर-
पदाजाहियुक्ते ।
३०. षष्ठ्यतसर्थप्रत्ययेन ।
३१. एनपा द्वितीया ।
३२. पृथग्विनानानाभिस्तृतीयान्य-
तरस्याम् ।
३३. करणे च स्तोकाल्पकृच्छ्र-
कतिपयस्यासत्त्ववचनस्य ।
३४. दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् ।
३५. दूरान्तिकार्थेभ्यो द्वितीया च ।
३६. सप्तम्यधिकरणे च ।
३७. यस्य च भावेन भावलक्षणम् ।
३८. षष्ठी चानादरे ।
३९. स्वामीश्वराधिपतिदायादसाक्षि-
प्रतिभूप्रसूतैश्च ।
४०. आयुक्तकुशलाभ्यां चासेवायाम् ।
४१. यतश्च निर्धारणम् ।
४२. पञ्चमी विभक्ते ।
४३. साधुनिपुणाभ्यामर्चायां
सप्तम्यप्रतेः ।
४४. प्रसितोत्सुकाभ्यां तृतीया च ।
४५. नक्षत्रे च लुपि ।
४६. प्रातिपदिकार्थलिङ्गपरिमाण-
वचनमात्रे प्रथमा ।
४७. सम्बोधने च ।
४८. सामन्त्रितम् ।
४९. एकवचनं सम्बुद्धिः ।
५०. षष्ठी शेषे ।
५१. ज्ञोऽविदर्थस्य करणे ।
५२. अधीगर्थदयेशां कर्मणि ।
५३. कृञः प्रतियत्ने ।
५४. रुजार्थानां भाववचनानामज्वरेः ।
५५. आशिषि नाथः ।
५६. जासिनिप्रहणनाटक्राथपिषां
हिंसायाम् ।
५७. व्यवहृपणोः समर्थयोः ।
५८. दिवस्तदर्थस्य ।
५९. विभाषोपसर्गे ।
६०. द्वितीया ब्राह्मणे ।
६१. प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने ।
६२. चतुर्थ्यर्थे बहुलं छन्दसि ।
६३. यजेश्च करणे ।
६४. कृत्वोऽर्थप्रयोगे कालेऽधिकरणे ।
६५. कर्तृकर्मणोः कृति ।
६६. उभयप्राप्तौ कर्मणि ।
६७. क्तस्य च वर्तमाने ।
६८. अधिकरणवाचिनश्च ।
६९. न लोकाव्ययनिष्ठाखलर्थतृनाम् ।
७०. अकेनोर्भविष्यदाधमर्ण्ययोः ।
७१. कृत्यानां कर्तरि वा ।
७२. तुल्यार्थैरतुलोपमाभ्यां
तृतीयान्यतरस्याम् ।
७३. चतुर्थी चाशिष्यायुष्यमद्रभद्र-
कुशलसुखार्थहितैः ।

* * *

# परिशिष्टम् - ४

## सिद्धान्तकौमुद्याः कारकादिविभक्तिप्रकरणम्*

### प्रथमा

**प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा - २.३.४६** । नियतोपस्थितिकः प्रातिपदिकार्थः । मात्रशब्दस्य प्रत्येकं योगः । प्रातिपदिकार्थमात्रे लिङ्गमात्राद्याधिक्ये संख्यामात्रे च प्रथमा स्यात् । उच्चैः । नीचैः । कृष्णः । श्रीः । ज्ञानम् । अलिङ्गा नियतलिङ्गाश्च प्रातिपदिकार्थमात्र इत्यस्योदारहणम् । अनियतलिङ्गास्तु लिङ्गमात्राद्याधिक्यस्य - तटः, तटी, तटम् । परिमाणमात्रे - द्रोणो व्रीहिः । द्रोणरूपं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरित्यर्थः । प्रत्ययार्थे परिमाणे प्रकृत्यर्थोऽभेदेन संसर्गेण विशेषणम्, प्रत्ययार्थस्तु परिच्छेद्यपरिच्छेदकभावेन व्रीहौ विशेषणमिति विवेकः । वचनं संख्या । एकः । द्वौ । बहवः । इहोक्तार्थत्वाद्विभक्तेरप्राप्तौ वचनम् ।

**संबोधने च - २.३.४७** । इह प्रथमा स्यात् । हे राम ।

### द्वितीया

**कारके - २.४.२३** । इत्यधिकृत्य ।

**कर्तुरीप्सिततमं कर्म - १.४.४९** । कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात् । 'कर्तुः' किम् ? माषेष्वश्वं बध्नाति । कर्मण ईप्सिता माषाः, न तु कर्तुः । तमब्ग्रहणं किम् ? पयसा ओदनं भुङ्क्ते । 'कर्म' इत्यनुवृतौ पुनः कर्मग्रहणमाधारनिवृत्त्यर्थम् । अन्यथा गेहं प्रविशतीत्यत्रैव स्यात् ।

**अनभिहिते - २.३.१** । इत्यधिकृत्य ।

**कर्मणि द्वितीया - २.३.२** । अनुक्ते कर्मणि द्वितीया स्यात् । हरिं भजति । अभिहिते तु कर्मणि 'प्रातिपदिकार्थमात्रे' इति प्रथमैव । अभिधानं तु प्रायेण तिङ्कृत्तद्धितसमासैः । तिङ्, हरिः सेव्यते । कृत्, लक्ष्म्या सेवितः । तद्धितः, शतेन क्रीतः शत्यः । समासः, प्राप्त आनन्दो यं स प्राप्तानन्दः । क्वचिन्निपातेनाभिधानम् । यथा - 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ।' साम्प्रतमित्यस्य हि युज्यत इत्यर्थः ।

**तथायुक्तं चानीप्सितम् - १.४.५०** । ईप्सिततमवत्क्रियया युक्तमनीप्सितमपि कारकं कर्मसंज्ञं स्यात् । ग्रामं गच्छंस्तृणं स्पृशति । ओदनं भुञ्जानो विषं भुङ्क्ते ।

---

* सर्वाणि कारकसूत्राणि पूर्वम् इहग्रन्थे सोदाहरणं न व्याख्यातानि । अव्याख्यातानि अपि कारकसूत्राणि कदाचित् अपेक्ष्यन्ते । अतः तेषाम् अपि सूत्राणां परिशीलनाय कौमुद्याः समग्रं कारकप्रकरणम् अत्र निवेशितम् ।

**अकथितं च - १.४.५१ ।** अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात् ।

दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् ।
कर्मयुक्स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ।।

'दुहादीनां द्वादशानां तथा नीप्रभृतीनां चतुर्णां कर्मणा यद्युज्यते तदेवाकथितं कर्म' इति परिगणनं कर्तव्यमित्यर्थः । गां दोग्धि पयः । बलिं याचते वसुधाम् । अविनीतं विनयं याचते । तण्डुलानोदनं पचति । गर्गाञ्छतं दण्डयति । व्रजमवरुणद्धि गाम् । माणवकं पन्थानं पृच्छति । वृक्षमवचिनोति फलानि । माणवकं धर्मं ब्रूते शास्ति वा । शतं जयति देवदत्तम् । सुधां क्षीरनिधिं मथ्नाति । देवदत्तं शतं मुष्णाति । ग्राममजां नयति, हरति, कर्षति, वहति वा । अर्थनिबन्धनेयं संज्ञा । बलिं भिक्षते वसुधाम् । माणवकं धर्मं भाषते, अभिधत्ते, वक्तीत्यादि । 'कारकम्' किम् ? माणवकस्य पितरं पन्थानं पृच्छति । 'अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्' (वा ११०३-११०४) । कुरून् स्वपिति । मासमास्ते । गोदोहमास्ते । क्रोशमास्ते ।

**गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ - १.४.५२ ।** गत्याद्यर्थानां शब्दकर्मणामकर्मकाणां चाणौ यः कर्ता स णौ कर्म स्यात् ।

शत्रूनगमयत्स्वर्गं वेदार्थं स्वानवेदयत् ।
आशयच्चामृतं देवान्वेदमध्यापयद्विधिम् ।
आसयत्सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः ।

'गति-' इत्यदि किम् ? पाचयत्योदनं देवदत्तेन । 'अण्यन्तानाम्' किम् ? गमयति देवदत्तो यज्ञदत्तं, तमपरः प्रयुङ्क्ते । गमयति देवदत्तेन यज्ञदत्तं विष्णुमित्रः । 'नीवह्योर्न' (वा ११०९) । नाययति वाहयति वा भारं भृत्येन । 'नियन्तृकर्तृकस्य वहेरनिषेधः' (वा १११०) । वाहयति रथं वाहान् सूतः । 'आदिखाद्योर्न' (वा ११०९) । आदयति खादयति वान्नं वटुना । 'भक्षेरहिंसार्थस्य न' (वा ११११) । भक्षयत्यन्नं वटुना । 'अहिंसार्थस्य' किम् ? भक्षयति बलीवर्दान् सस्यम् । 'जल्पतिप्रभृतीनामुपसंख्यानम्' (वा ११०८) । जल्पयति भाषयति वा धर्मं पुत्रं देवदत्तः । दृशेश्च (वा ११०८) । दर्शयति हरिं भक्तान् । सूत्रे ज्ञानसामान्यार्थानामेव ग्रहणं, न तु तद्विशेषार्थानामित्यनेन ज्ञाप्यते । तेन स्मरति, जिघ्रति इत्यादीनां न । स्मारयति घ्रापयति वा देवदत्तेन । 'शब्दायतेर्न' (वा ११०५) । शब्दाययति देवदत्तेन । धात्वर्थसंगृहीतकर्मत्वेनाकर्मकत्वात् प्राप्तिः । येषां देशकालादिभिन्नं कर्म न संभवति तेऽत्राकर्मकाः । न त्वविवक्षित-कर्मणोऽपि । तेन 'मासमासयति देवदत्तम्' इत्यादौ कर्मत्वं भवति । 'देवदत्तेन पाचयति' इत्यादौ तु न ।

**हृक्रोरन्यतरस्याम् - १.४.५३ ।** हृक्रोरणौ यः कर्ता स णौ वा कर्मसंज्ञः स्यात् । हारयति कारयति वा भृत्यं भृत्येन वा कटम् । 'अभिवादिदृशोरात्मनेपदे वेति वाच्यम्' (वा १११४) । अभिवादयते दर्शयते देवं भक्तं भक्तेन वा ।

**अधिशीङ्स्थासां कर्म - १.४.४६** । अधिपूर्वाणामेषामाधारः कर्म स्यात् । अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः ।

**अभिनिविशश्च - १.४.४७** । अभिनीत्येतत्संघातपूर्वस्य विशतेराधारः कर्म स्यात् । अभिनिविशते सन्मार्गम् । 'परिक्रयणे संप्रदानम्-' (सू ५८०) इति सूत्रादिह मण्डूकप्लुत्यान्यतरस्यां ग्रहणमनुवर्त्य व्यवस्थितविभाषाश्रयणात्क्वचिन्न । पापेऽभिनिवेशः ।

**उपान्वध्याङ्वसः - १.४.४८** । उपादिपूर्वस्य वसतेराधारः कर्म स्यात् । उपवसति, अनुवसति, अधिवसति, आवसति वा वैकुण्ठं हरिः । 'अभुक्त्यर्थस्य न' (वा १०८७) । वने उपवसति ।

'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।
द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ।।' (वा १४४४)

उभयतः कृष्णं गोपाः । सर्वतः कृष्णम् । धिक् कृष्णभक्तम् । उपर्युपरि लोकं हरिः । अध्यधि लोकम् । अधोऽधो लोकम् । 'अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि' (वा १४४२-१४४३) । अभितः कृष्णम् । परितः कृष्णम् । ग्रामं समया । निकषा लङ्काम् । हा कृष्णभक्तम् । तस्य शोच्यत इत्यर्थः । 'बुभुक्षितं न प्रतिभाति किञ्चित्' ।

**अन्तरान्तरेण युक्ते - २.३.४** । आभ्यां योगे द्वितीया स्यात् । अन्तरा त्वां मां हरिः । अन्तरेण हरिं न सुखम् ।

**कर्मप्रवचनीयाः - १.४.८३** । इत्यधिकृत्य ।

**अनुर्लक्षणे - १.४.८४** । लक्षणे द्योत्येऽनुरुक्तसंज्ञः स्यात् । गत्युपसर्गसंज्ञापवादः ।

**कर्मप्रवचनीययुक्ते द्वितीया - २.३.८** । एतेन योगे द्वितीया स्यात् । पर्जन्यो जपमनु प्रावर्षत् । हेतुभूतजपोपलक्षितं वर्षणमित्यर्थः । परापि हेतौ तृतीयानेन बाध्यते । 'लक्षणेत्थंभूत-' (सू ५५२) इत्यादिना सिद्धे पुनः संज्ञाविधानसामर्थ्यात् ।

**तृतीयार्थे - १.४.८५** । अस्मिन्द्योत्येऽनुरुक्तसंज्ञः स्यात् । नदीमन्ववसिता सेना । नद्या सह सम्बद्धेत्यर्थः । 'षिञ् बन्धने' क्तः ।

**हीने - १.४.८६** । हीने द्योत्येऽनुः प्राग्वत् । अनु हरिं सुराः । हरेर्हीना इत्यर्थः ।

**उपोऽधिके च - १.४.८७** । अधिके हीने च द्योत्ये उपेत्यव्ययं प्राक्संज्ञं स्यात् । अधिके सप्तमी वक्ष्यते । हीने - उप हरिं सुराः ।

**लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः - १.४.९०** । एष्वर्थेषु विषयभूतेषु प्रत्यादयः उक्तसंज्ञाः स्युः । लक्षणे - वृक्षं प्रति, परि, अनु वा विद्योतते विद्युत् । इत्थंभूताख्याने - भक्तो विष्णुं प्रति, परि, अनु वा । भागे - लक्ष्मीर्हरिं प्रति, परि, अनु वा । हरेर्भाग इत्यर्थः । वीप्सायाम् - वृक्षं वृक्षं प्रति, परि, अनु वा सिञ्चति । अत्रोपसर्गत्वाभावान्न षत्वम् । 'एषु' किम् ? परिषिञ्चति ।

**अभिरभागे - १.४.९१** । भागवर्जे लक्षणादावभिरुक्तसंज्ञः स्यात् । हरिमभिवर्तते । भक्तो हरिमभि । देवं देवमभि सिञ्चति । 'अभागे' किम् ? यदत्र ममाभिष्यात्तद्दीयताम् ।

**अधिपरी अनर्थकौ - १.४.९३** । उक्तसंज्ञौ स्तः । कुतोऽध्यागच्छति । कुतः पर्यागच्छति । गतिसंज्ञाबाधात् 'गतिर्गतौ' (सू ३९७७) इति निघातो न ।

**सुः पूजायाम् - १.४.९४** । सु सिक्तम्, सुस्तुतम् । अनुपसर्गत्वान्न षः । 'पूजायाम्' किम् ? सुषिक्तं किं तवात्र । आक्षेपोऽयम् ।

**अतिरतिक्रमणे च - १.४.९५** । अतिक्रमणे पूजायां चातिः कर्मप्रवचनीयसंज्ञः स्यात् । अति देवान्कृष्णः ।

**अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु - १.४.९६** । एषु द्योत्येष्वपिरुक्तसंज्ञः स्यात् । सर्पिषोऽपि स्यात् । अनुपसर्गत्वान्न षः । संभावनायां लिङ् । तस्याः एव विषयभुते भवने कर्तुर्दौर्लभ्यप्रयुक्तं दौर्लभ्यं द्योतयन्नपिशब्दः स्यादित्यनेन संबध्यते । 'सर्पिषः' इति षष्ठी त्वपिशब्दबलेन गम्यमानस्य बिन्दोरवयवावयविभाव-संबन्धे । इयमेव ह्यपिशब्दस्य पदार्थद्योतकता नाम । द्वितीया तु नेह प्रवर्तते सर्पिषो बिन्दुना योगो न त्वपिनेत्युक्तत्वात् । अपि स्तुयाद्विष्णुम् । संभावनं शक्त्युत्कर्षम्-आविष्कर्तुमत्युक्तिः । अपि स्तुहि । अन्ववसर्गः कामचारानुज्ञा । धिग्देवदत्तमपि स्तुयाद् वृषलम् । गर्हा । अपि सिञ्च अपि स्तुहि । समुच्चये ।

**कालाध्वनोरत्यन्तसंयोगे - २.३.५** । इह द्वितीया स्यात् । मासं कल्याणी । मासमधीते । मासं गुडधानाः । क्रोशं कुटिला नदी । क्रोशमधीते । क्रोशं गिरिः । 'अत्यन्तसंयोगे' किम् ? मासस्य द्विरधीते । क्रोशस्यैकदेशे पर्वतः ।

## तृतीया

**स्वतन्त्रः कर्ता - १.४.५४** । क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् ।

**साधकतमं करणम् - १.४.४२** । क्रियासिद्धौ प्रकृष्टोपकारकं कारकं करणसंज्ञं स्यात् । तमब्ग्रहणं किम् ? गङ्गायां घोषः ।

**कर्तृकरणयोस्तृतीया - २.३.१८** । अनभिहिते कर्तरि करणे च तृतीया स्यात् । रामेण बाणेन हतो वाली । 'प्रकृत्यादिभ्य उपसंख्यानम्' (वा १४६६) । प्रकृत्या चारुः । प्रायेण याज्ञिकः । गोत्रेण गार्ग्यः । समेनैति । विषमेणैति । द्विद्रोणेन धान्यं क्रीणाति । सुखेन दुःखेन वा यातीत्यादि ।

**दिवः कर्म च - १.४.४३** । दिवः साधकतमं कारकं कर्मसंज्ञं स्याच्चात्करणसंज्ञम् । अक्षैरक्षान्वा दीव्यति ।

**अपवर्गे तृतीया - २.३.६** । अपवर्गः फलप्राप्तिः । तस्यां द्योत्यायां कालाध्वनोरत्यन्तसंयोगे तृतीया स्यात् । अह्ना क्रोशेन वानुवाकोऽधीतः । 'अपवर्गे' किम् ? मासमधीतो नायातः ।

**सहयुक्तेऽप्रधाने - २.३.१९** । सहार्थेन युक्तेऽप्रधाने तृतीया स्यात् । पुत्रेण

सहागतः पिता । एवं साकंसार्धंसंयोगेऽपि । विनापि तद्योगं तृतीया । 'वृद्धो यूना...' (सू ९३१) इत्यादिनिर्देशात् ।

**येनाङ्गविकारः - २.३.२०** । येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीया स्यात् । अक्ष्णा काणः । अक्षिसंबन्धिकाणत्वविशिष्टः इत्यर्थः । अङ्गविकारः किम् ? अक्षि काणमस्य ।

**इत्थंभूतलक्षणे - २.३.२१** । कश्चित्प्रकारं प्राप्तस्य लक्षणे तृतीया स्यात् । जटाभिस्तापसः । जटाज्ञाप्यतापसत्वविशिष्ट इत्यर्थः ।

**संज्ञोऽन्यतरस्यां कर्मणि - २.३.२२** । संपूर्वस्य जानातेः कर्मणि तृतीया वा स्यात् । पित्रा पितरं वा सञ्जानीते ।

**हेतौ - २.३.२३** । हेत्वर्थे तृतीया स्यात् । द्रव्यादिसाधारणं निर्व्यापारसाधारणं च हेतुत्वम् । करणत्वं तु क्रियामात्रविषयं व्यापारनियतं च । दण्डेन घटः । पुण्येन दृष्टो हरिः । फलमपीह हेतुः । अध्ययनेन वसति । 'गम्यमानापि क्रिया कारकविभक्तौ प्रयोजिका' । अलं श्रमेण । श्रमेण साध्यं नास्तीत्यर्थः । इह साधनक्रियां प्रति श्रमः करणम् । शतेन शतेन वत्सान्पाययति पयः । शतेन परिच्छिद्येत्यर्थः । 'अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया' (वा५०४०) । दास्या संयच्छते कामुकः । धर्म्ये तु भार्यायै संयच्छति ।

## चतुर्थी

**कर्मणा यमभिप्रैति स सम्प्रदानम् - १.४.३२** । दानस्य कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञः स्यात् ।

**चतुर्थी सम्प्रदाने - २.३.१३** । विप्राय गां ददाति । अनभिहिते इत्येव । दीयतेऽस्मै दानीयो विप्रः । 'क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्' (वा १०८५) । पत्ये शेते । 'कर्मणः करणसंज्ञा सम्प्रदानस्य च कर्मसंज्ञा' (वा १०८६) । पशुना रुद्रं यजते । पशुं रुद्राय ददातीत्यर्थः ।

**रुच्यर्थानां प्रीयमाणः - १.४.३३** । रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणोऽर्थः सम्प्रदानं स्यात् । हरये रोचते भक्तिः । अन्यकर्तृकोऽभिलाषो रुचिः । हरिनिष्ठप्रीतेर्भक्तिः कर्त्री । 'प्रीयमाणः' किम् ? देवदत्ताय रोचते मोदकः पथि ।

**श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः - १.४.३४** । एषां प्रयोगे बोधयितुमिष्टः सम्प्रदानं स्यात् । गोपी स्मरात्कृष्णाय ह्नुते तिष्ठते शपते वा । 'ज्ञीप्स्यमानः' किम् ? देवदत्ताय श्लाघते पथि ।

**धारेरुत्तमर्णः -१.४.३५** । धारयतेः प्रयोगे उत्तमर्ण उक्तसंज्ञः स्यात् । भक्ताय धारयति मोक्षं हरिः । 'उत्तमर्णः' किम् ? देवदत्ताय शतं धारयति ग्रामे ।

**स्पृहेरीप्सितः - १.४.३६** । स्पृहयतेः प्रयोगः इष्टः सम्प्रदानं स्यात् । पुष्पेभ्यः स्पृहयति । 'ईप्सितः' किम् ? पुष्पेभ्यो वने स्पृहयति । ईप्सितमात्र इयं संज्ञा । प्रकर्षविवक्षायां तु परत्वात्कर्मसंज्ञा । पुष्पाणि स्पृहयति ।

**क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः - १.४.३७** । क्रुधाद्यर्थानां प्रयोगे यं प्रति कोपः स उक्तसंज्ञः स्यात् । हरये क्रुध्यति द्रुह्यति ईर्ष्यति असूयति वा । 'यं प्रति कोपः' किम् ? भार्यामीर्ष्यति । मैनामन्यो द्राक्षीदिति । क्रोधोऽमर्षः । द्रोहोऽपकारः । ईर्ष्याक्षमा । असूया दोषाविष्करणम् । द्रोहादयोऽपि कोपभावना एव गृह्यन्ते । अतो विशेषणं सामान्येन 'यं प्रति कोपः' इति ।

**क्रुधद्रुहोरुपसृष्टयोः कर्म - १.४.३८** । सोपसर्गयोरनयोर्योगे यं प्रति कोपस्तत्कारकं कर्मसंज्ञं स्यात् । क्रूरमभिक्रुध्यति, अभिद्रुह्यति ।

**राधीक्ष्योर्यस्य विप्रश्नः - १.४.३९** । एतयोः कारकं सम्प्रदानं स्यात् । यदीयो विविधः प्रश्नः क्रियते । कृष्णाय राध्यति, ईक्षते वा । पृष्टो गर्गः शुभाशुभं पर्यालोचयतीत्यर्थः ।

**प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता - १.४.४०** । आभ्यां परस्य शृणोतेर्योगे पूर्वस्य प्रवर्तनारूपस्य व्यापारस्य कर्ता सम्प्रदानं स्यात् । विप्राय गां प्रतिशृणोति आशृणोति वा । विप्रेण मह्यं देहीति प्रवर्तितस्तं प्रतिजानीत इत्यर्थः ।

**अनुप्रतिगृणश्च - १.४.४१** । आभ्यां गृणातेः कारकं पूर्वव्यापारस्य कर्तृभूतमुक्तसंज्ञं स्यात् । होत्रेऽनुगृणाति प्रतिगृणाति वा । होता प्रथमं शंसति, तमध्वर्युः प्रोत्साहयतीत्यर्थः ।

**परिक्रयणे सम्प्रदानमन्यतरस्याम् - १.४.४४** । नियतकालं भृत्या स्वीकरणं परिक्रयणं तस्मिन्साधकतमं कारकं सम्प्रदानसंज्ञं वा स्यात् । शतेन शताय वा परिक्रीतः । 'तादर्थ्ये चतुर्थी वाच्या' (वा१४५८) मुक्तये हरिं भजति । 'क्लृपि सम्पद्यमाने च' (वा १४५९) । भक्तिर्ज्ञानाय कल्पते सम्पद्यते जायते इत्यादि । 'उत्पातेन ज्ञापिते च' (वा १४६०) । वाताय कपिला विद्युत् । 'हितयोगे च' (वा १४६१) । ब्राह्मणाय हितम् ।

**क्रियार्थोपपदस्य च कर्मणि स्थानिनः - २.३.१४** । क्रियार्था क्रिया उपपदं यस्य तस्य स्थानिनोऽप्रयुज्यमानस्य तुमुनः कर्मणि चतुर्थी स्यात् । फलेभ्यो याति । फलान्याहर्तुं यातीत्यर्थः । नमस्कुर्मो नृसिंहाय । नृसिंहमनुकूलयितुमित्यर्थः । एवं, 'स्वयंभुवे नमस्कृत्य' इत्यादावपि ।

**तुमर्थाच्च भाववचनात् - २.३.१५** । 'भाववचनाश्च' (सू ३१८०) इति सूत्रेण यो विहितस्तदन्ताच्चतुर्थी स्यात् । यागाय याति यष्टुं यातीत्यर्थः ।

**नमः स्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च - २.३.१६** । एभिर्योगे चतुर्थी स्यात् । हरये नमः । 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' (प १०३) । नमस्करोति देवान् । प्रजाभ्यः स्वस्ति । अग्नये स्वाहा । पितृभ्यः स्वधा । 'अलमिति पर्याप्त्यर्थग्रहणम्' (वा

१४६२)। तेन दैत्येभ्यो हरिरलं, प्रभुः, समर्थः, शक्त इत्यादि । प्रभ्वादियोगे षष्ठ्यपि साधुः । 'तस्मै प्रभवति-' (सू १७६५) 'स एषां ग्रामणीः' (सू १८७८) इति निर्देशात् । तेन 'प्रभुर्बुभूषुर्भुवनत्रयस्य' इति सिद्धम् । वषडिन्द्राय । चकारः पुनर्विधानार्थः, तेनाशीर्विवक्षायां परामपि 'चतुर्थी चाशिषि-' (सू ६३१) इति षष्ठीं बाधित्वा चतुर्थ्येव भवति । स्वस्ति गोभ्यो भूयात् ।

**मन्यकर्मण्यनादरे विभाषाऽप्राणिषु - २.३.१७** । प्राणिवर्जे मन्यतेः कर्मणि चतुर्थी वा स्यात्तिरस्कारे । न त्वां तृणं मन्ये तृणाय वा । श्यना निर्देशात्तानादिकयोगे न । न त्वां तृणं मन्वे । 'अप्राणिष्वित्यपनीय नौकाकान्नशुकसृगालवर्जेष्विति वाच्यम्' (वा १४६४)। तेन ' न त्वां नावं मन्ये' इत्यत्राऽप्राणित्वेऽपि चतुर्थी न । 'न त्वां शुने मन्ये' इत्यत्र प्राणित्वेऽपि भवत्येव ।

**गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि - २.३.१२** । अध्वभिन्ने गत्यर्थानां कर्मण्येते स्तश्चेष्टायाम् । ग्रामं ग्रामाय वा गच्छति । चेष्टायाम् किम् ? मनसा हरिं व्रजति । अनध्वनि इति किम् ? पन्थानं गच्छति । गन्त्राऽधिष्ठितेऽध्वन्येवायं निषेधः । यदा तूत्पथात्पन्था एवाक्रमितुमिष्यते तदा चतुर्थी भवत्येव, उत्पथेन पथे गच्छति ।

## पञ्चमी

**ध्रुवमपायेऽपादानम् - १.४.२४** । अपायो विश्लेषः, तस्मिन्साध्ये ध्रुवमवधिभूतं कारकमपादानं स्यात् ।

**अपादाने पञ्चमी - २.३.२८** । ग्रामादायाति । धावतोऽश्वात्पतति । कारकं किम् ? वृक्षस्य पर्णं पतति । 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' (वा १०७६)। पापाज्जुगुप्सते, विरमति । धर्मात्प्रमाद्यति ।

**भीत्रार्थानां भयहेतुः - १.४.२५** । भयार्थानां त्राणार्थानां च प्रयोगे भयहेतुरपादानं स्यात् । चोराद्बिभेति । चोरात्त्रायते । भयहेतुः किम् ? अरण्ये बिभेति, त्रायते वा ।

**पराजेरसोढः - १.४.२६** । पराजेः प्रयोगेऽसह्योऽर्थोऽपादानं स्यात् । अध्ययनात्पराजयते । ग्लायतीत्यर्थः । असोढः किम् ? शत्रून्पराजयते । अभिभवतीत्यर्थः ।

**वारणार्थानामीप्सितः - १.४.२७** । प्रवृत्तिविघातो वारणम्, वारणार्थानां धातूनां प्रयोगे ईप्सितोऽर्थोऽपादानं स्यात् । यवेभ्यो गां वारयति । ईप्सितः किम् ? यवेभ्यो गां वारयति क्षेत्रे ।

**अन्तर्धौ येनादर्शनमिच्छति - १.४.२८** । व्यवधाने सति यत्कर्तृकस्यात्मनो दर्शनस्याभावमिच्छति तदपादानं स्यात् । मातुर्निलीयते कृष्णः । अन्तर्धौ किम् ? चौरान् न दिदृक्षते । इच्छतिग्रहणं किम् ? अदर्शनेच्छायां सत्यां सत्यपि दर्शने यथा स्यात् । (देवदत्ताद्यज्ञदत्तो निलीयते) ।

**आख्यातोपयोगे - १.४.२९** । नियमपूर्वकविद्यास्वीकारे वक्ता प्राक्संज्ञः स्यात् । उपाध्यायादधीते । उपयोगे किम् ? नटस्य गाथां शृणोति ।

**जनिकर्तुः प्रकृतिः - १.४.३०** । जायमानस्य हेतुरपादानं स्यात् । ब्रह्मणः प्रजाः प्रजायन्ते ।

**भुवः प्रभवः - १.४.३१** । भवनं भूः । भूकर्तुः प्रभवस्तथा, हिमवतो गङ्गा प्रभवति । तत्र प्रकाशते इत्यर्थः ।

'ल्यब्लोपे कर्मण्यधिकरणे च' (वा १४७४-१४७५) । प्रासादात्प्रेक्षते, आसनात्प्रेक्षते । प्रासादमारुह्य, आसन उपविश्य, प्रेक्षत इत्यर्थः । श्वशुराज्जिहेति । श्वशुरं वीक्ष्येत्यर्थः । 'गम्यमानापि क्रिया कारकविभक्तीनां निमित्तम्' (वा ५०४१) कस्मात्त्वम्, नद्याः । 'यतश्चाध्वकालनिमानं ततः पञ्चमी' (वा १४७७) । 'तद्युक्तादध्वनः प्रथमासप्तम्यौ' (वा १४७९) । 'कालात्सप्तमी च वक्तव्या' (वा १४७८) । वनाद् ग्रामो योजनं योजने वा । कार्तिक्या आग्रहायणी मासे ।

**अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते - २.३.२९** । एतैर्योगे पञ्चमी स्यात् । अन्येत्यर्थग्रहणम् । इतरग्रहणं प्रपञ्चार्थम् । अन्यो भिन्न इतरो वा कृष्णात् । आराद्वनात् । ऋते कृष्णात् पूर्वो ग्रामात् । दिशि दृष्टः शब्दो दिक्शब्दः । तेन सम्प्रति देशकालवृत्तिना योगेऽपि भवति । चैत्रात्पूर्वः फाल्गुनः । अवयववाचियोगे तु न । 'तस्य परमाम्रेडितम्' (सू ८३) इति निर्देशात् । पूर्वं कायस्य । अञ्चूत्तरपदस्य तु दिक्शब्दत्वेऽपि 'षष्ठ्यतसर्थ-' (सू ६०९) इति षष्ठीं बाधितुं पृथग्ग्रहणम् । प्राक् प्रत्यग् वा ग्रामात् । आच् - दक्षिणा ग्रामात् । आहि - दक्षिणाहि ग्रामात् । 'अपादाने पञ्चमी' (सू ५८७) इति सूत्रे 'कार्तिक्याः प्रभृति' इति भाष्यप्रयोगात्प्रभृत्यर्थयोगे पञ्चमी । भवात् प्रभृति आरभ्य वा सेव्यो हरिः । 'अपपरिबहिः-' (सू ६६६) इति समासविधानाद् ज्ञापकाद्बहिर्योगे पञ्चमी । ग्रामाद्बहिः ।

**अपपरी वर्जने - १.४.८८** । एतौ वर्जने कर्मप्रवचनीयौ स्तः ।

**आङ्मर्यादावचने - १.४.८९** । आङ्मर्यादायामुक्तसंज्ञः स्यात् । वचनग्रहणाद् अभिविधावपि ।

**पञ्चम्यपाङ्परिभिः - २.३.१०** । एतैः कर्मप्रवचनीयैर्योगे पञ्चमी स्यात् । अप हरेः, परि हरेः संसारः । परिरत्र वर्जने । लक्षणादौ तु हरिं परि । आ मुक्तेः संसारः । आ सकलाद् ब्रह्म ।

**प्रतिः प्रतिनिधिप्रतिदानयोः - १.४.९२** । एतयोरर्थयोः प्रतिरुक्तसंज्ञः स्यात् ।

**प्रतिनिधिप्रतिदाने च यस्मात् - २.३.११** । अत्र कर्मप्रवचनीयैर्योगे पञ्चमी स्यात् । प्रद्युम्नः कृष्णात् प्रति । तिलेभ्यः प्रतियच्छति माषान् ।

**अकर्तर्यृणे पञ्चमी - २.३.२४** । कर्तृवर्जितं यदृणं हेतुभूतं ततः पञ्चमी स्यात् । शताद्बद्धः । अकर्तरि किम् ? शतेन बन्धितः ।

**विभाषा गुणेऽस्त्रियाम् - २.३.२५** । गुणे हेतावस्त्रीलिङ्गे पञ्चमी वा स्यात् । जाड्याद् जाड्येन वा बद्धः । गुणे किम् ? धनेन कुलम् । अस्त्रियां किम् ? बुद्ध्या मुक्तः । 'विभाषा' इति योगविभागाद् अगुणे स्त्रियां च क्वचित् । धूमादग्निमान् । नास्ति घटोऽनुपलब्धेः ।

**पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् - २.३.३२** । एभिर्योगे तृतीया स्यात् पञ्चमीद्वितीये च । अन्यतरस्यां ग्रहणं समुच्चयार्थम्, पञ्चमीद्वितीये चानुवर्तेते । पृथग् रामेण रामाद् रामं वा । एवं विना, नाना ।

**करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य - २.३.३३** । एभ्योऽद्रव्यवचनेभ्यः करणे तृतीयापञ्चम्यौ स्तः । स्तोकेन स्तोकाद्वा मुक्तः । द्रव्ये तु स्तोकेन विषेण हतः ।

**दूरान्तिकार्थेभ्यो द्वितीया च - २.३.३५** । एभ्यो द्वितीया स्यात्, चात् पञ्चमीतृतीये च । प्रातिपदिकार्थमात्रे विधिरयम् । ग्रामस्य दूरं दूराद् दूरेण वा, अन्तिकम् अन्तिकाद् अन्तिकेन वा । असत्त्ववचनस्य इत्यनुवृत्तेर्ने ह - दूरः पन्थाः ।

## षष्ठी

**षष्ठी शेषे - २.३.५०** । कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिसंबन्धः शेषः, तत्र षष्ठी स्यात् । राज्ञः पुरुषः । कर्मादीनामपि संबन्धमात्रविवक्षायां षष्ठ्येव । सतां गतम् । सर्पिषो जानीते । मातुः स्मरति । एधोदकस्योपस्कुरुते । भजे शंभोश्चरणयोः । फलानां तृप्तः ।

**षष्ठी हेतुप्रयोगे - २.३.२६** । हेतुशब्दप्रयोगे हेतौ द्योत्ये षष्ठी स्यात् । अन्नस्य हेतोर्वसति ।

**सर्वनाम्नस्तृतीया च - २.३.२७** । सर्वनाम्नो हेतुशब्दस्य च प्रयोगे हेतौ द्योत्ये तृतीया स्यात् षष्ठी च । केन हेतुना वसति । कस्य हेतोः । 'निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्' (वा १४७३) । किं निमित्तं वसति, केन निमित्तेन, कस्मै निमित्ताय इत्यादि । एवं किं कारणम्, को हेतुः, किं प्रयोजनम् इत्यादि । प्रायग्रहणादसर्वनाम्नः प्रथमाद्वितीये न स्तः । ज्ञानेन निमित्तेन हरिः सेव्यः, ज्ञानाय निमित्ताय इत्यादि ।

**षष्ठ्यतसर्थप्रत्ययेन - २.३.३०** । एतद्योगे षष्ठी स्यात् । '-दिक्शब्द-' (सू ५९५) इति पञ्चम्याः अपवादः । ग्रामस्य दक्षिणतः पुरः पुरस्ताद् उपरि उपरिष्टात् ।

**एनपा द्वितीया - २.३.३१** । एनबन्तेन योगे द्वितीया स्यात् । 'एनपा' इति योगविभागात्षष्ठ्यपि । दक्षिणेन ग्रामं ग्रामस्य वा ।

**दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् - २.३.३४** । एतैर्योगे षष्ठी स्यात्पञ्चमी च । दूरं निकटं ग्रामस्य ग्रामाद्वा ।

**ज्ञोऽविदर्थस्य करणे - २.३.५१** । जानातेरज्ञानार्थस्य करणे शेषत्वेन विवक्षिते षष्ठी स्यात् । सर्पिषो ज्ञानम् ।

**अधीगर्थदयेशां कर्मणि - २.३.५२** । एषां कर्मणि शेषे षष्ठी स्यात् । मातुः स्मरणम् । सर्पिषो दयनम् ईशनं वा ।

**कृञः प्रतियत्ने - २.३.५३** । प्रतियत्नो गुणाधानम् । कृञः कर्मणि शेषे षष्ठी स्याद् गुणाधाने । एधोदकस्योपस्करणम् ।

**रुजार्थानां भाववचनानामज्वरेः - २.३.५४** । भावकर्तृकाणां ज्वरिवर्जितानां रुजार्थानां कर्मणि शेषे षष्ठी स्यात् । चौरस्य रोगस्य रुजा । 'अज्वरिसन्ताप्योरिति वाच्यम्' (वा १५०७) । रोगस्य चौरज्वरः चौरसन्तापो वा । रोगकर्तृकं चौरसंबन्धि ज्वरादिकमित्यर्थः ।

**आशिषि नाथः - २.३.५५** । आशीरर्थस्य नाथतेः शेषे कर्मणि षष्ठी स्यात् । सर्पिषो नाथनम् । आशिषि इति किम् ? माणवकनाथनम् । तत्सम्बन्धिनी याच्ञेत्यर्थः ।

**जासिनिप्रहणनाटक्राथपिषां हिंसायाम् - २.३.५६** । हिंसार्थानामेषां शेषे कर्मणि षष्ठी स्यात् । चौरस्योज्जासनम् । निप्रौ संहतौ विपर्यस्तौ व्यस्तौ वा । चौरस्य निप्रहणनं प्रणिहननं निहननं प्रहणनं वा । 'नट अवस्कन्दने' चुरादिः । चौरस्योन्नाटनम् । चौरस्य क्राथनम् । वृषलस्य पेषणम् । हिंसायाम् किम् ? धानापेषणम् ।

**व्यवहृपणोः समर्थयोः - २.३.५७** । शेषे कर्मणि षष्ठी स्यात् । द्यूते क्रयविक्रयव्यवहारे चानयोस्तुल्यार्थता । शतस्य व्यवहरणं पणनं वा । समर्थयोः किम् ? शलाकाव्यवहारः । गणनेत्यर्थः । ब्राह्मणपणनं स्तुतिरित्यर्थः ।

**दिवस्तदर्थस्य - २.३.५८** । द्यूतार्थस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि षष्ठी स्यात् । शतस्य दीव्यति । तदर्थस्य किम् ? ब्राह्मणं दीव्यति । स्तौतीत्यर्थः ।

**विभाषोपसर्गे - २.३.५९** । पूर्वयोगापवादः । शतस्य शतं वा प्रतिदीव्यति ।

**प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने - २.३.६१** । देवतासम्प्रदानकेऽर्थे वर्तमानयोः प्रेष्यब्रुवोः कर्मणो हविषो वाचकाच्छब्दात्षष्ठी स्यात् । अग्नये छागस्य हविषो वपाया मेदसः प्रेष्य अनुब्रूहि वा ।

**कृत्वोऽर्थप्रयोगे कालेऽधिकरणे - २.३.६४** । कृत्वोऽर्थानां प्रयोगे कालवाचिन्यधिकरणे शेषे षष्ठी स्यात् । पञ्चकृत्वोऽह्नो भोजनम् । द्विरह्नो भोजनम् । शेषे किम् ? द्विरहन्यध्ययनम् ।

**कर्तृकर्मणोः कृति - २.३.६५** । कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात् । कृष्णस्य कृतिः । जगतः कर्ता कृष्णः । 'गुणकर्मणि वेष्यते' (वा ५०४२) । नेता अश्वस्य स्रुघ्नस्य स्रुघ्नं वा । कृति किम् ? तद्धिते मा भूत्, कृतपूर्वी कटम् ।

**उभयप्राप्तौ कर्मणि - २.३.६६** । उभयोः प्राप्तिर्यस्मिन्कृति तत्र कर्मण्येव षष्ठी

स्यात् । आश्चर्यो गवां दोहोऽगोपेन । 'स्त्रीप्रत्यययोरककारयोर्नायं नियमः' (वा १५१३) । भेदिका बिभित्सा वा रुद्रस्य जगतः । 'शेषे विभाषा' (वा १५१३) । स्त्रीप्रत्यय इत्येके । विचित्रा जगतः कृतिर्हरेर्हरिणा वा । केचिदविशेषेण विभाषामिच्छन्ति । शब्दानामनुशासनमाचार्येण आचार्यस्य वा ।

**क्तस्य च वर्तमाने - २.३.६७** । वर्तमानार्थस्य क्तस्य योगे षष्ठी स्यात् । 'न लोक-' (सू ६२७) इति निषेधस्यापवादः । राज्ञां मतो बुद्धः पूजितो वा ।

**अधिकरणवाचिनश्च - २.३.६८** । क्तस्य योगे षष्ठी स्यात् । इदमेषामासितं शयितं गतं भुक्तं वा ।

**न लोकाव्ययनिष्ठाखलर्थतृनाम् - २.३.६९** । एषां प्रयोगे षष्ठी न स्यात् । लादेश - कुर्वन् कुर्वाणो वा सृष्टिं हरिः । उ - हरिं दिदृक्षुः, अलङ्करिष्णुर्वा । उक - दैत्यान्घातुको हरिः । 'कमेरनिषेधः' (वा १५१९) । लक्ष्म्याः कामुको हरिः । अव्ययम् - जगत्सृष्ट्वा, सुखं कर्तुम् । निष्ठा - विष्णुना हता दैत्याः, दैत्यान्हतवान्विष्णुः । खलर्थाः - ईषत्करः प्रपञ्चो हरिणा । तृन् इति प्रत्याहारः 'शतृशानचौ' इति तृशब्दादारभ्य आतृनो नकारात् । शानन् - सोमं पवमानः । चानश् - आत्मानं मण्डयमानः । शतृ - वेदमधीयन् । तृन् - कर्ता लोकान् । 'द्विषः शतुर्वा' (वा १५२२) । मुरस्य मुरं वा द्विषन् । सर्वोऽयं कारकषष्ठ्याः प्रतिषेधः । शेषे षष्ठी तु स्यादेव । ब्राह्मणस्य कुर्वन् । नरकस्य जिष्णुः ।

**अकेनोर्भविष्यदाधमर्ण्ययोः - २.३.७०** । भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थेनश्च योगे षष्ठी न स्यात् । सतः पालकोऽवतरति । व्रजं गामी । शतं दायी ।

**कृत्यानां कर्तरि वा - २.३.७१** । षष्ठी वा स्यात् । मया मम वा सेव्यो हरिः । कर्तरि इति किम् ? गेयो माणवकः साम्नाम् । 'भव्यगेय-' (सू २८९४) इति कर्तरि यद्विधानादनभिहितं कर्म । अत्र योगो विभज्यते - **कृत्यानाम्** । 'उभयप्राप्तौ' इति 'न' इति चानुवर्तते । तेन नेतव्या व्रजं गावः कृष्णेन । ततः **कर्तरि वा** । उक्तोऽर्थः ।

**तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् - २.३.७२** । तुल्यार्थैर्योगे तृतीया वा स्यात्पक्षे षष्ठी । तुल्यः सदृशः समो वा कृष्णस्य कृष्णेन वा । अतुलोपमाभ्यां किम् ? तुला उपमा वा कृष्णस्य नास्ति ।

**चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः - २.३.७३** । एतदर्थैर्योगे चतुर्थी वा स्यात्पक्षे षष्ठी । आशिषि - आयुष्यं चिरञ्जीवितं कृष्णाय कृष्णस्य वा भूयात् । एवं मद्रं भद्रं कुशलं निरामयं सुखं शम् अर्थः प्रयोजनं हितं पथ्यं वा भूयात् । आशिषि किम् ? देवदत्तस्यायुष्यमस्ति । व्याख्यानात्सर्वत्रार्थग्रहणम् । मद्रभद्रयोः पर्यायत्वादन्यतरो न पठनीयः ।

## सप्तमी

**आधारोऽधिकरणम् - १.४.४५** । कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः

कारकमधिकरणसंज्ञः स्यात् ।

**सप्तम्यधिकरणे च - २.३.३६** । अधिकरणे सप्तमी स्यात् । चकाराद् दूरान्तिकार्थेभ्यः । औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्यात्याधारस्त्रिधा । कटे आस्ते । स्थाल्यां पचति । मोक्षे इच्छास्ति । सर्वस्मिन्नात्मास्ति । वनस्य दूरे अन्तिके वा । 'दूरान्तिकार्थेभ्यः-' (सू ६०५) इति विभक्तित्रयेण सह चतस्रोऽत्र विभक्तयः फलिताः । 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्' (वा १४८५) । अधीती व्याकरणे । अधीतमनेनेति विग्रहे 'इष्टादिभ्यश्च' (सू १८८८) इति कर्तरीनिः । 'साध्वसाधुप्रयोगे च' (वा १४८६) । साधुः कृष्णो मातरि, असाधुर्मातुले । 'निमित्तात्कर्मयोगे' (वा १४९०) । निमित्तमिह फलम् । योगः संयोगसमवायात्मकः ।

'चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥' (इति भाष्यम्)

हेतुतृतीयात्र प्राप्ता तन्निवारणार्थम् इदम् । सीमा अण्डकोशः । पुष्कलको गन्धमृगः । योगविशेषे किम् ? वेतनेन धान्यं लुनाति ।

**यस्य च भावेन भावलक्षणम् - २.३.३७** । यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी स्यात् । गोषु दुह्यमानासु गतः । **अर्हाणां कर्तृत्वेऽनर्हाणामकर्तृत्वे तद्वैपरीत्ये च** । सत्सु तरत्सु असन्त आसते । असत्सु तिष्ठत्सु सन्तस्तरन्ति । सत्सु तिष्ठत्सु असन्तस्तरन्ति । असत्सु तरत्सु सन्तस्तिष्ठन्ति ।

**षष्ठी चानादरे - २.३.३८** । अनादराधिक्ये भावलक्षणे षष्ठीसप्तम्यौ स्तः । रुदति रुदतो वा प्राव्राजीत् । रुदन्तं पुत्रादिकमनादृत्य संन्यस्तवानित्यर्थः ।

**स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च - २.३.३९** । एतैः सप्तभिर्योगे षष्ठीसप्तम्यौ स्तः । षष्ठ्यामेव प्राप्तायां पाक्षिकसप्तम्यर्थं वचनम् । गवां गोषु वा स्वामी । गवां गोषु वा प्रसूतः । गा एवानुभवितुं जात इत्यर्थः ।

**आयुक्तकुशलाभ्यां चासेवायाम् - २.३.४०** । आभ्यां योगे षष्ठीसप्तम्यौ स्तस्तात्पर्येऽर्थे । आयुक्तो व्यापारितः । आयुक्तः कुशलो वा हरिपूजने हरिपूजनस्य वा । आसेवायां किम् ? आयुक्तो गौः शकटे । ईषद्युक्त इत्यर्थः ।

**यतश्च निर्धारणम् - २.३.४१** । जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणं यतस्ततः षष्ठीसप्तम्यौ स्तः । नृणां नृषु वा ब्राह्मणः श्रेष्ठः । गवां गोषु वा कृष्णा बहुक्षीरा । गच्छतां गच्छत्सु वा धावञ्छीघ्रः । छात्राणां छात्रेषु वा मैत्रः पटुः ।

**पञ्चमी विभक्ते - २.३.४२** । विभागो विभक्तम् । निर्धार्यमाणस्य यत्र भेद एव तत्र पञ्चमी स्यात् । माथुराः पाटलिपुत्रकेभ्य आढ्यतराः ।

**साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः - २.३.४३** । आभ्यां योगे सप्तमी स्यादर्चायाम्, न तु प्रतेः प्रयोगे । मातरि साधुर्निपुणो वा । अर्चायां किम् ? निपुणो राज्ञो भृत्यः । इह तत्त्वकथने तात्पर्यम् । 'अप्रत्यादिभिरिति वक्तव्यम्' (वा १४९३) ।

साधुर्निपुणो वा मातरं प्रति परि अनु वा ।

**प्रसितोत्सुकाभ्यां तृतीया च - २.३.४४ ।** आभ्यां योगे तृतीया स्यात् चात्सप्तमी । प्रसित उत्सुको वा हरिणा हरौ वा ।

**नक्षत्रे च लुपि - २.३.४५ ।** नक्षत्रे प्रकृत्यर्थे यो लुप्संज्ञया लुप्यमानस्य प्रत्ययस्यार्थस्तत्र वर्तमानात्तृतीयासप्तम्यौ स्तोऽधिकरणे । 'मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत् ।' मूले श्रवणे इति वा । लुपि किम् ? पुष्ये शनिः ।

**सप्तमीपञ्चम्यौ कारकमध्ये - २.३.७ ।** शक्तिद्वयमध्ये यौ कालाध्वानौ ताभ्यामेते स्तः । अद्य भुक्त्वायं द्व्यहे द्व्यहाद्वा भोक्ता । कर्तृशक्त्योर्मध्येऽयं कालः । इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत् । कर्तृकर्मशक्त्योर्मध्येऽयं देशः । अधिकशब्देन योगे सप्तमीपञ्चम्याविष्येते । 'तदस्मिन्नधिकम्-' (सू १८४६) इति 'यस्मादधिकम्-' (सू ६४५) इति च सूत्रनिर्देशात् । लोके लोकाद्वा अधिको हरिः ।

**अधिरीश्वरे - १.४.९७ ।** स्वस्वामिसम्बन्धे अधिः कर्मप्रवचनीयसंज्ञः स्यात् ।

**यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी - २.३.९ ।** अत्र कर्मप्रवचनीययुक्ते सप्तमी स्यात् । उप परार्धे हरेर्गुणाः । परार्धादधिका इत्यर्थः । ऐश्वर्ये तु स्वस्वामिभ्यां पर्यायेण सप्तमी । अधि भुवि रामः । अधि रामे भूः । 'सप्तमी शौण्डैः' (सू ७१७) इति समासपक्षे तु रामाधीना । 'अषडक्ष-' (सू २०७९) इत्यादिना खः ।

**विभाषा कृञि - १.४.९८ ।** अधिः करोतौ प्राक्संज्ञो वा स्यादीश्वरेऽर्थे । यदत्र मामधिकरिष्यति । विनियोक्ष्यत इत्यर्थः । इह विनियोक्तुरीश्वरत्वं गम्यते । अगतित्वात् 'तिङि चोदात्तवति' (सू ३९७८) इति निघातो न ।

## इति सिद्धान्तकौमुद्यां कारकप्रकरणम् ।

* * *



# जि. महाबलेश्वरभट्टः

बेङ्गलूरुनगरस्थायां श्रीचामराजेन्द्रसंस्कृतमहापाठशालायां व्याकरणशास्त्रस्य उपप्राध्यापकत्वेन कार्यं कृत्वा निवृत्तः श्री जि. महाबलेश्वरभट्टवर्यः संस्कृतसेवां करोति अनवरतम् । व्याकरणशास्त्रे अलङ्कारशास्त्रे च अनितरसाधारणी गतिः भट्टमहोदयस्य । वेदान्तादिशास्त्रेषु अपि विशेषगतिः न न अस्ति तस्य । 'शिष्टा क्रिया कस्यचिदात्मसंस्था सङ्क्रान्तिरन्यस्य विशेषयुक्ता' इति वदति कालिदासः । 'यस्य ज्ञानं बोधनकौशलं च भवति सः एव अध्यापकानां धुरि [illegible]ठापयितव्यः' इति वदति सः एव । भट्टमहोदयः ज्ञानेन बोधनकौशलेन च संस्कृतक्षेत्रे सुप्रथितः अस्ति । विविधेषु बोधनवर्गेषु भागग्रहणं, विद्वद्गोष्ठीषु भाषाविषयकप्रबन्धानाम् उपस्थापनम् इत्यादयः तेन सर्वदा क्रियमाणाः एव भवन्ति । कारकप्रकरणं व्याकरणशास्त्रे हृदयभूतम् । हृदयपरिशीलनं हृदयचिकित्साञ्च वैद्याः सावधानेन मनसा यथा कुर्वन्ति, तथैव कारकमपि अवहितेन चित्तेन अवधारणीयं बोधनीयञ्च । अध्येतृभिः अध्यापयितृभिः च विनायासं कारकं सुविदितं भवतु इति मनीषया इदं पुस्तकम् आरचितम् ।




ISBN 978- 81-88220-26-4
Rs.25.00